29

[redacted]

श्री हर्षपुष्पामृत जैन ग्रंथमाला

श्री

# अनेकार्थ संग्रहः सटीकः

केरवाकरकौमुदी टीकालङ्कृतः
( तृतीयकाण्डस्तस्य १६८ पत्राणि )

[redacted]



ग्रन्थकारः
कलिकालसर्वज्ञः पू. आ. श्री हेमचन्द्रसूरी[redacted]रः

टीकाकारः
पूज्याचार्यदेव श्री महेन्द्रसूरीश्वरः

संपादकः संशोधकः
पं. श्री जिनेन्द्रविजय गणिवरः

प्रकाशिका : श्री हर्षपुष्पामृत जैन ग्रंथमाला
लाखाबावल – शांतिपुरी (सौराष्ट्र)

| वीर सं. | वि. सं. | मूल्य |
| --- | --- | --- |
| २५०७ | २०३१ | रु. १० |

नोंध :– अनेकार्थ संग्रह सटीक भाग बीजाना १६८ पेजनी बीजी हजार छपाई अने बाकीनी एक हजार छपावाथी ए पेजनी छुटी बुक प्रगट करेल छे. बंने भागनुं विशेष उदाहरण स्थान संशोधन वि. चाले छे जेथी ते रीते संशोधित नवी आवृति आखा ग्रंथनी भविष्यमां प्रगट थाय तेम धारणा छे.

– प्रकाशिका

मुद्रक
कीरचंद जे. शेठ
प्रिन्टलेण्ड
वढवाण शहेर

# ॥ अथ तृतीयः काण्डः ॥

अणुको निपुणेऽल्पे चाशोकौ कङ्केल्लिवञ्जुलौ ।
निःशोकपारदौ चाऽप्यशोका तु कटुरोहिणी ॥१॥

अभीको निर्भये कम्रेऽप्यनीकं रणसैन्ययोः ।
अलीकमप्रिये भाले वितथेऽनूकमन्वये ॥२॥

अर्हम् । अथ तृतीयं त्रिस्वरकाण्डमारभ्यते । तत्रादौ कान्ताः । अणुको निपुणेऽल्पे च । निपुणोऽणुरणुकः । "तनुपुत्राणुबृहती" ७–३–२३ । इति कः । अणुप्रकारो वा "कोऽण्वादेः" ७-२-७६ । इति कः । वाच्यलिङ्गः । द्वयोर्यथा–पर्याणमश्वेष्वणुका विदन्ति । अशोकौ कंकेल्लिवञ्जुलौ । निःशोकपारदौ चापि । न शवति अशोकः । "भीणूशलि" (उणादि २१) इति कः । नास्ति शोकोऽस्येति वा । निःशोके वाच्यलिङ्गः । कङ्केल्लौ निःशोके च यथा – वरसहकार(वरसहायः)करञ्जकवीर(वीरनामा तरुः अन्यत्र वीरवलः)तशेऽशोकमदनपुन्नागसर्वद्रुममयराजन् कथ–मसि न बिभितकः क्वापि । वञ्जुलो वेतसः पारदः सूतः । तत्र क्लीबे इत्यन्यः । अशोका तु कटुरोहिणी । कटुरोहिणी ओषधिः ॥१॥ अभीको निर्भये कम्रेऽपि । न विद्यते भीरस्य अभीकः । "शेषाद्वा" ७–३–१७५ । इति कच् । अभिकामयते वा । "अभेरीश्च वा" ७–१–१८९ । इति कः । निर्भये वाच्यलिङ्गः । तत्र यथा–मेदस्विनः सरभसोपगतानभीकान् । कम्रे कामुके यथा– अभीकपीतान्तिकधूसरेभ्यो गर्भस्थताम्बूलरसारुणेभ्यः । पश्य श्रियं कर्षति काञ्चनारं पञ्चालनारीदशनच्छदेभ्यः । अनीकं रणसन्ययोः । अनिति अनेन अनीकम् । "स्यमि कषि" (उ० ४६) इति ईकः ।

**शीलेऽनूको गतजन्मन्यंशुकं श्लक्ष्णवाससि ।**
**उत्तरीये वस्त्रमात्रेऽप्यलकाश्चूर्णकुन्तलाः ।।३।।**
**अलका तु कुबेरस्य नगर्यामन्तिकं पुनः**
**पार्श्वेऽन्तिका तु चुल्ल्यां स्यात्सातलाख्यौषधेऽपि च ।।४।।**

पुंक्लीबः । रणे युद्धे यथा–सहस्रगोरिवानीकं दुःसहं भवतः परैः सैन्ये चम्वां यथा–तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः । अलीकमप्रिये भाले वितथे । अल्यते वार्यते भूष्यते वा अलीकम् (अलिकमपि) । "स्यमि कषि" इति ईकः । सर्वेषु यथा--ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामिव न त्यजन्ति । अनूकमन्वये । शीले । अन्वव्यति समवैति अनूकम् । अचि न्यङ्क्वादित्वात् कत्वम् । द्वयोर्यथा–वरस्यानूकवित्तानि प्रेक्ष्य कन्या प्रदीयते ।।२।। अनूको गतजन्मनि । गतजन्मापरिणतवया यथा–स्पृशन्ति शूकयानूकं नो कामिन्यः सयौवनाः । अंशुकं श्लक्ष्णवाससि । उत्तरीये वस्त्रमात्रेऽपि । अश्नुते अंशुकम् । "कञ्चुकांशुक" (उ० ५७) इति साधुः । श्लक्ष्णवाससि यथा–श्वासाः संवृततारहाररुचयः सम्भिन्नचीनांशुकाः । उत्तरीये यथा–नवनखपदमङ्गं गोपयस्यंशुकेन । वस्त्रमात्रे यथा–शुक्लांशुकोपरिचितानि निरन्तराभिर्वेश्मानि रश्मिवितताानि नराधिपानाम् । अलकाश्चूर्णकुन्तलाः । अल्यन्ते अलकाः । "दृ कृ न्" इति अकः । पुंक्लीबः । प्रायो भूम्नि यथा–विलुलितालकसंहतिरामृशन् मृगदृशां श्रमवारि ललाटजम् ।।३।। अलका तु कुबेरस्य नगर्याम् । यथा–गन्तव्या ते वसतिरलकानाम यक्षेश्वराणां । अन्तिकं पुनः । पार्श्वे । अन्तोऽस्ति अस्य अन्तिकम् । "अतोऽनेकस्वरात्" ७–२–६ इति इकः । धर्ममात्रे क्लीबे तद्वति वाच्यलिङ्गः । यथा–तामन्तिकन्यस्तबलिप्रदीपाम् । अन्तिका तु चुल्ल्यां स्यात् सातलाख्यौषधेऽपि च । चुल्ल्यां यथा–न दुष्येदन्तिकास्थितम् ।।४।। अलर्को धवलार्के स्याद् योगोन्मादितशुन्यपि । अल्यतेऽलर्कः । "निष्कतुरुष्क" (उ० २६) इति साधुः । धवलः श्वेतः । अर्को वृक्षविशेषः । तत्र यथा–कुर्यादर्कमलर्केण योगेन कर्मणादिना । उन्मादिते शुनि यथा–अलर्कविषवत्कालं प्राप्यावश्यं विकुर्वते विजातयः । अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि । अम्बैव अम्बिका । उमायां यथा–योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिका केशरी । पाण्डुमातरि यथा–अम्बिकायामभूत्पाण्डुः । देवताभिद् द्वाविंशस्य जिनपतेरुपासिका कूष्माण्डिकानाम । तत्र यथा–भूयाद्बिम्बच्छिदेऽम्बिका । मातरि जनन्यां यथा–अभ्यषेचि शिरो येषामम्बिका चरणाम्बुभिः ।।५।। अन्धिका तु कैतवे स्यात्सर्षपीमिद्धयोरपि । अन्धयति अन्धिका । कैतवं द्यूतम् । सर्षपी ओषधिः मिद्धं निद्रा । कैतवमिद्धयोर्यथा–अन्धिकान्धाविधास्यन्ति कुतो धर्मं नराधमाः । अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च । अम्लो रसोऽस्त्यस्यामम्लिका । तिन्तिडीका चिञ्चा । तत्र यथा–गुडूची कोमलाम्लिका । अम्लोद्गारश्चाङ्गेरिका च ओषध्यौ ।।६।। आलोको दर्शने बन्दिघो(भा)



***अलर्को धवलार्के स्याद्योगोन्मादितशुन्यपि ।**
**अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि ।।५।।**
**अन्धिका तु कैतवे स्यात्सर्षपीमिद्धयोरपि ।**
**अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च ।।६।।**

* प्र० अलर्को नृपे श्वेतार्के रोगोन्मादितशून्यपि ।

**आलोको दर्शने बन्दिघोषणोद्योतयोरपि ।**
**आनकः पटहे भेर्यां ध्वनन्मेघमृदङ्गयोः ॥७॥**
**आतङ्को रुजि शङ्कायां सन्तापे मुरजध्वनौ ।**
**आह्निकं स्यात्पुनरहर्निर्वर्त्ये नित्यकर्मणि ॥८॥**

षणोद्योतयोरपि । आलोकनम् आलोक्यतेऽनेन वा आलोकः । दर्शने यथा–आलोके ते निपतति पुरा सावलिव्याकुला वा । बन्दिघोषणे यथा–विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृतासमस्य । उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः । उद्योते यथा–तडिद्दीपालोकैर्दिशि दिशि चरन्तीव जलदाः । आनकः पटहे भेर्यां ध्वनन्मेघमृदङ्गयोः । "अणति शब्दायते आनकः । "अणेर्डित्" (उ० ७२) इति आनकः । पटहे भेर्यां मृदङ्गे च यथा–प्रतिनादिताम्बरविमानमानकैर्नितरां मुदा परमयेव दध्वने ध्वनन्(नदन्)मेघो गर्जन्पर्जन्यः ॥७॥ आतङ्को रुजि शङ्कायां सन्तापे मुरजध्वनौ । आतङ्कनमातङ्कत्यस्माद्वा आतङ्कः । सन्तापे पुंक्लीबः । रुजि शङ्कायां सन्तापे च यथा–पुरुषायुषजीविन्यो निरातङ्का निरीतयः । मुरजध्वनौ- मृदङ्गनादः । आह्निकं स्यात्पुनरहर्निर्वर्त्ये नित्यकर्मणि भोजने ग्रन्थभागे च । अह्नानिर्वृत्तम् अह्निकम् । "तेन निर्वृत्ते" ६–२–७१ । इति इकण् । अह्नि भवं वा "वर्षाकालेभ्यः" ६–३–८० । इति इकण् । "अनीनाऽदटचह्लोऽतः" ७–४–६७ । इत्यह्नोऽकारलोपः । चतुर्ष्वर्थेषु । अहर्निवर्त्ये वाच्यलिङ्गः । अन्यत्र क्लीबे । अहर्निवर्त्ये एकाहनिष्पाद्ये । यथा–यस्याह्निकैः प्रबन्धैर्विदुषामह्नाय विस्मितं चेतः । नित्यकर्मणि यथा–महर्षिहर्षविहितस्नानाह्निकाह्नाय वः ॥८॥ भोजने यथा–मध्याह्ने-



**भोजने ग्रन्थभागे चाऽऽढकः प्रस्थचतुष्टये ।**
**आढकी तुवरीक्ष्वाकुः कटुतुम्ब्यां नृपान्तरे ॥९॥**
***उदर्कस्तूत्तरकालफले मदनकण्टके ।**
**उष्णको धर्म उद्युक्तातुरयोरूर्मिका पुनः ॥१०॥**

देयमाह्निकम् । ग्रन्थभागो ग्रन्थावयवः । यथा–अवान्तरप्रकरणविश्रामे शीघ्रं पाठत आह्निकम् । आढकः प्रस्थचतुष्टये । आढौकते आढकः । "कीचक" (उ० ३३) इति अके साधुः । त्रिलिङ्गः । यथा–शाणं पाणितलं मुष्टं कुडवं प्रस्थमाढकम् । द्रोणवहं चक्रमशो विजानीयाच्चतुर्गुणम् । आढकी तुवरी । गौरादित्वाद् ङीः । तुवरी धान्यभेदः । तत्र यथा–आढकी कफपित्तघ्नी किञ्चिन्मारुतकोपिनी । इक्ष्वाकुः कटुतुम्ब्यां नृपान्तरे ॥ "इष्यते इक्ष्वाकुः । "इषेः स्वाकुक् (उ० ७५७) कटुतुम्ब्यां स्त्रीलिङ्गः । नृपान्तरे नृपविशेषे पुंसि । तत्र यथा–इक्ष्वाकुवंशप्रभवो यदाते भेत्स्यत्यजः कुम्भमयोमुखेन ॥९॥ उदर्कस्तूत्तरकालफले मदनकण्टके । उदियर्त्ति उदर्कः । "निष्कतुरुष्क" (उ० २६) इति के साधुः । उत्तरकालफले यथा–शुभोदर्काय वैकल्यमपि पापेषु कर्मसु । मदनेन कामेन कृतः कण्टको रोमाञ्चो मदनकण्टकः । उत्तरकालेऽपि । उष्णको धर्म उद्युक्तातुरयोः । उष्ण एव उष्णकः । उष्णंकारी वा "शीताच्च कारिणि" ७–१–१८६ । इति कः । उद्युक्तातुरयोर्वाच्यलिङ्गः । घर्मो निदाघः । उद्युक्त उद्यमी । तत्र यथा– पुष्णन्ति भर्तुर्मुदमुष्णका जनाः । आतुरो रोगी । ऊर्मिका पुनः । उत्कण्ठायां भृङ्गनादे वस्त्रभङ्गेऽङ्गुलीयके । वीच्याञ्च । ऊर्मिरेव

*प्र० स्यादुलूकः काकशत्राविन्द्रे भारतयोधिनि ।
उष्णिका मृद्भाण्डभेदे करभस्य च योषिति ॥ उदर्क० ।

**उत्कण्ठायां भृङ्गनादे वस्त्रभङ्गेऽङ्गुलीयके ।**
**वीच्यां च कनकं हेम्नि कनको नागकेशरे ॥११॥**
**धत्तूरे पञ्चके काञ्चनारकिंशुकयोरपि ।**
**करको दाडिमे पक्षिभेदे कमण्डलौ ॥१२॥**

ऊर्मिका । स्वार्थेकः । ऊर्मिप्रतिकृतिर्वा । "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" ७–१–१०८। इति कः ॥१०॥ पञ्चस्वर्थेषु अङ्गुलीयके यथा–क्षतोर्मिकाकनकपरागपङ्क्तिम् । शेषेषु यथा–ऊर्मिकाभिर्विभान्त्येता नदीवध्वो लता इव । कनकं हेम्नि । कनति कनकम् । "दृ कृ नृ" इति अकः । यथा–दंष्ट्रया कनकभङ्गपिशङ्ग्या । कनको नागकेसरे ॥११॥ धत्तूरे पञ्चके *काञ्चनारकिंशुकयोरपि पञ्चापि वृक्षभेदाः । करको दाडिमे पक्षिभेदे करे कमण्डलौ लट्वाकरङ्क(ञ्ज)योर्वर्षोपले च । कीर्यते किरति वा करकः । "दृ कृ नृ" इति अकः । कर एव वा । सप्तस्वर्थेषु वर्षोपले त्रिलिङ्गः । कमण्डलुकरङ्कयोः पुंक्लीबः । शेषेषु पुंसि ॥१२॥ लट्वा कुसुम्भं तत्र दाडिमे च यथा–करककुसुमताम्रश्चन्द्रमानम्रमूर्तिः । करे मण्डलौ च यथा–करकं करके न्यस्य मस्करी भास्करोदये । करङ्को जलादीनां स्थानम् । तत्र यथा–यस्यां विद्रुमवर्णवर्ण्यकरकप्रोद्गीर्ण--र्णश्चिरात् । वर्षोपले यथा–तान् कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान् । कटुकं कटु । कटुरोहिणी व्योषं च । कट्वेव कटुकम् । कटौ गुणे पुंसि । तद्वति वाच्यलिङ्गः । तत्र यथा–आतपः कटुकोरुक्षश्छायामधुरशीतला । कटुरोहिणी ओषधिः ।

* यद्यपि केषुचिदनेकार्थेषु कांचनारादिष्वर्थेषु क्लीबत्वमुक्तं तथापि मखादिषु पुंस्त्वम् ।



**लट्वाकरङ्कयोर्वर्षोपले च कटुकं कटु ।**
**कटुरोहिणी व्योषं च कञ्चुकश्चोलवर्मणोः ॥१३॥**
**वर्धापकगृहीताङ्गवसने वारबाणके ।**
**निर्मोके कटकस्त्वद्रिनितम्बे बाहुभूषणे ॥१४॥**

व्योषं त्र्यूषणम् । कञ्चुकश्चोलव(च)चर्मणोः वर्धापकगृहीताङ्गवसने वारवाणके । निर्मोके । कच्यते कञ्चुकः । "कञ्चुकांशुक" (उ० ५७) इति साधुः । पुंक्लीबः । चोलः कञ्चुलिका । तत्र निर्मोके च यथा–आभोगिनौ मण्डलिनौ तत्क्षणोन्मुक्तकञ्चुकौ । वरमाशीविषौ स्पृष्टौ न तु तन्व्याः पयोधरौ । वर्मणि कवचे यथा–वलानि शूराणि घनाश्च कञ्चुकाः ॥१३॥ वर्धापकगृहीताङ्गवसने यथा–नृत्यन्ति कञ्चुकैर्लब्धैः सौविदल्लाः सुतोत्सवे । वारवाणके नृनिचोले च यथा–अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादसौ वामनः । कटकस्त्वद्रिनितम्बे बाहुभूषणे । सेनायां राजधान्यां च । कटति कटकः । "दृ कृ नृ" (उ०२७) इति अकः । पुंक्लीबः । अद्रिनितम्बे यथा–स्फटिककटकभूमिर्नाटयत्येषशैलः । बाहुभूषणे यथा–पद्मरागकटकाङ्कितहस्ताः ॥१४॥ सेनायां यथा–मुक्तास्तृणाणि परितः कटकं चरन्तः । राजधान्यां यथा–भ्रातः क्वचलितोऽसि यामि कटकं किं तत्र सेवाशया । क्रमुको भद्रमुस्तके । गूवाके(ले) पट्टिकालोध्रे । क्रामति क्रमुकः । "क्रमेः क्रम् च व" (उ० ५३) इति उकः । भद्रमुस्तको मुस्ताभेदः । गूवाके पूगे यथा आयातः क्रमुकत्वचा विरचितां भिक्षा पुटीमुद्वहन् । पट्टिकालोध्रो रक्तलोध्रः । कण्टकः क्षुद्रवैरिणि । वेणौ द्रुमाङ्गे रोमाञ्चे । कण्टति कण्टकः । "दृ कृ नृ" (उ० २७) इति अकः । द्रुमाङ्गे

**सेनायां राजधान्यां च क्रमुको भद्रमुस्तके ।**
**गुवाले पट्टिकालोध्रे कण्टकः क्षुद्रवैरिणि ॥१५॥**
**वेणौ द्रुमाङ्गे रोमाञ्चे कलङ्कोऽङ्कापवादयोः ।**
**कालायसमले चापि कर्णिका कर्णभूषणे ॥१६॥**

रोमाञ्चे च पुंक्लीबः । अन्यत्र पुंसि । क्षुद्रवरिणि द्रुमाङ्गे च यथा—कटकः कण्टकान् सर्वान् मर्दयामास निर्दयम् । सहि न क्षमते यस्माद् बिन्दुनाप्यात्मनोऽधिकम् ॥१५॥ वेणुर्वंशः । रोमाञ्चे यथा—लक्ष्मीकरग्रहणकण्टकितप्रकोष्ठः । कलङ्कोऽङ्कापवादयोः । कालायसमले चापि । कीर्यते कलङ्कः । "किरोऽङ्कोरोलश्च वा" (उ० ६२) इति अङ्कः । अङ्के लाञ्छने यथा—कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीम् । अपवादे यथा—दिनकर कुलास्कन्दी कोऽयं कलङ्कनवाङ्कुरः । कालायसमले यथा—निष्कलङ्कः कृपाणः । कर्णिका कर्णभूषणे बीजकोशे सरोजस्य करमध्याङ्गुलावपि कुट्टन्यां हस्तिहस्ताग्रे । कर्णेभवा कर्णिका । "कर्णललाटात्कल्" ६–३–१४१ । कर्णयति वा । कर्णभूषणे यथा—कर्णिकाकिरणकर्बुरितास्याम् ॥१६॥ सरोजबीजकोशे हस्तिहस्ताग्रे च यथा – गजे स्थिता श्रीपद्मे च भ्राम्यन्मधुपकर्णिके । कर मध्याङ्गुलौ कुट्टन्यां च यथा—कर्णिका स्वर्णवर्णाऽपि वर्ण्या नव विभूषणा (विगतभूषणा) । कणिका सूक्ष्मवस्तुनि । अग्निमन्थे । सूक्ष्मः कणः कणिका । कणाः स्फुलिङ्गाः सन्त्यत्र वा । सूक्ष्मवस्तुनि यथा—ते ग्रस्ताः पुनरभ्रतोयकणिका तीव्रव्रतैर्बर्हिभिः ॥ १७ ॥ अग्निमन्थोऽरणिः । गोधूमपिष्टेऽपि यथा—कणिकाखण्डाज्यकृतो लड्डुको मोदकश्च सः (मोदको लड्डुकश्च सः) । कामुकास्तु काम्यशोकातिमुक्तकाः ।



**बीजकोशे सरोजस्य करमध्याङ्गुलावपि ।**
**कुट्टन्यां हस्तिहस्ताग्रे कणिका सूक्ष्मवस्तुनि ॥१७॥**
**अग्निमन्थे कामुकास्तु काम्यशोकातिमुक्तकाः ।**
**कारकं कर्तृकर्माद्योः कारिका यातना नटी ॥१८॥**

कमनशीलः कामुकः । "शृकमि" ५–२–४० । इति उकण् । कामिनि वाच्यलिङ्गः । तत्र यथा—परिव्राट् कामुकशुनामेकस्यां प्रमदातनौ । अशोकातिमुक्तकौ वृक्षौ । कारकं कर्तृकर्माद्योः । करोति कारकम् । कर्तरि वाच्यलिङ्गः । कर्मादौ क्लीबे । कर्तरि यथा—खनितेव हि कूपस्य प्रासादस्येव कारकः । कर्मादौ यथा—षट् कारकाणि सम्बन्ध उक्तानुक्ततया द्विधा । कारिका यातना नटी । कृतिविवरणश्लोका नापितादिककर्म च । करणं कारिका । भावे णकः । यातना पीडा तत्र यथा—सह्या कथं नरकभूमिषु कारिका स्यात् । नट्यां विवरणश्लोके च यथा—कारिका कारिकेवेयं करोति क्रमनिर्णयम् ॥१८॥ कृतौ नापितादिक कर्मणि च यथा—अकार्षीः कारिकां कां त्वम् । कावृकः कुक्कुटे कोके पीतमुण्डे । कु ईषत् वृक इव कावृकः । "अल्पे" ३--२--१३६ । इति कोः कादेशः । कुक्कुटस्ताम्रचूडः । कोकश्चक्रवाकः । पीतमुण्डः सुगृहाख्यः पक्षी (सुघरी) । अथ कार्मुकः । वंशे ✓ कर्मणे शक्तः कार्मुकः । "योगकर्मभ्यां यो कञौ" ६--४--९४ । इति उकञ् ॥१९॥ वंशस्त्वचि सारः । कार्मुकमिष्वासे कर्म्मठे । कर्मठः कर्मशूरः, तत्र वाच्यलिङ्गः । इष्वासे धनुषि यथा—कार्मुकेणैव गुणिना बाणः सन्धानमेष्यति कर्मठे यथा— कार्मुकः शर्म्मकारणम् । क्षारको रसे । कोरके पक्ष्यादिपाशे । क्षरति क्षारकः । कोरके पुंक्लीबः । रसे

**कृतिविवरणश्लोका नापितादिककर्म च ।**
**कावृकः कुक्कुटे कोके पीतमुण्डेऽथ कार्मुकः ॥१९॥**
**वंशे कार्मुकमिष्वासे कर्म्मठे क्षारको रसे ।**
**कोरके पक्ष्यादिपाशे कालिका योगिनी भिदि ॥२०॥**

यथा--कः क्षते क्षारकं क्षिपेत् । कोरके यथा--क्षारकैः कुसुम-चापसायकैः । पक्ष्यादीनां पाशे बन्धने यथा--क्षारकाङ्कित-कूर्परः । कालिका योगिनी भिदि स्वर्णादिदोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे । क्रमदेयवस्तुमूल्ये कार्ष्ण्ये वृश्चिकपत्रयोः । रोमाल्यां धूमरीमांस्योः काकीपटोलशाखयोः । काल्येव कालिका । कालो वर्णोऽस्त्यस्या इति वा । "अतोऽनेकस्वरात्" ७--२--६ । इति इकः । कालयति वा । कालस्य भावो वा । चौरादित्वादकञ् । चतुर्दशस्वर्थेषु । योगिनि भिदि यथा--हरसिद्धेः प्रतीहारी कालिकानाम योगिनी ॥२०॥ स्वर्णादिदोषे यथा--निकषेण विना हेम्नः कालिका नहि लक्ष्यते । मेघाली सामान्येन मेघपङ्क्तिः । तत्र यथा--व्यभाव्यत प्रलयजकालिका-कृतिर्विद्रतः प्रतिबलकेतनावली । सुरायां मदिरायां यथा--याति कालिकया द्रव्यं कारूणां पापकर्मणाम् । गौर्यां यथा--विज्ञेयं कालिकामतम् । नवाम्बुदः कादम्बिनी तत्र यथा--कालि-केव निबिडा बलाकिनी । क्रमदेयवस्तुमूल्यं यद् व्ययकरणादौ व्यवहारिभिर्घृतादिवस्तुप्रवेशन।य द्रव्यं गृह्यते । कलान्तरेऽपि मखः । द्वयोर्यथा--दुःखेन दीयते वालैः कालिका कालजल्पिता । कार्ष्ण्ये यथा--शौर्योष्मभाजां भजत्तां मुखानि स्वबाहुमौर्वी-किणकालिकैव । वृश्चिकपत्रं पटोलशाखा च ओषधी ॥२१॥ रोमाल्यां यथा--दूर्वाल्येव नवा कुल्या वाला कालिकया बभौ ।



**स्वर्णादिदोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे ।**
**क्रमदेयवस्तुमूल्ये कार्ष्ण्ये वृश्चिकपत्रयोः ॥२१॥**
**रोमाल्यां धूमरीमांस्योः काकीपटोलशाखयोः ।**
**किम्पाको वृक्षभिद्यज्ञे कीटको निष्ठुरे कृमौ ॥२२॥**

धूमर्यां यथा--विकृत्य कालिकाम्भोजे मुनिः कैवर्त्तवालिकाम् । मांसी गन्धद्रव्यम् । काक्यां यथा--पुष्णाति कालिका पूर्वं पश्य कोकिलबालकान् । किम्पाको वृक्षभिद्यज्ञे । कुत्सितः पाकः परिणामोऽस्य किंपाकः । कुत्सितः पाको वा ल इति वा । वृक्ष-भिदि यथा--किम्पाकफलसंकाशाः । अज्ञो मूर्खः । वाच्यलिङ्गः । कीटको निष्ठुरे कृमौ । कीटयतीति कीटकः । कीट एव वा कीटकः। निष्ठुरे वाच्यलिङ्गः । कृमौ यथा--स मृत्वा जायते पापः पङ्के प्रकटकीटकः ॥२२॥ कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे । कच्यते कीचकः । "कीचकपेचक" (उ० ३३) इति साधुः ध्वनिमति वंशे यथा--सकीचकैर्मारुतपूर्णरन्ध्रै रणद्भिरापादित वंशकृत्यम् । दैत्यभेदे विराटश्याले यथा--भीमो भीषयते सैषमेचकः कीचकासृजा । कुलकं पञ्चादि श्लोकसमन्वये पटोलके कोलति कुलकम् । "ध्रु धून्दि" (उ० २९) इति किदकः । कुलं कायति वा पञ्चादिश्लोकानां समन्वय एकवाक्य-तयाऽर्थसङ्गतिः । यदाह--पञ्चादिभिश्चतुर्दशान्तैः कुलकम् । तत्र यथा--मुक्तकं कुलकं कोशः ॥२३॥ कुलकः कुलप्रधाने वल्मीके काकतिण्डुके । कुलप्रधाने यथा--क्रियेत यद्वा कुलकैः कुलोन्नतिः । वल्मीको वामलूरः । काकतिण्डुको वृक्षः । कुलिकस्तु कुलश्रेष्ठे द्रुमनागविशेषयोः । प्रशस्तं कुलमस्यास्ति कुलिकः । "अतोऽनेकस्वरात्" ७--२--६ । इति इकः ।

कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे ।
कुलकं पञ्चादिश्लोकसमन्वये पटोलके ।।२३।।

कुलकः कुलप्रधाने वल्मीके काकतिण्डुके ।
कुलिकस्तु कुलश्रेष्ठे द्रुमनागविशेषयोः ।।२४।।

त्रिष्वर्थेषु । नागविशेषे यथा— कर्कोटः कोटिकृत्वः प्रणमति पुरतस्तक्षके देहि चक्षुः सज्जः सेवाञ्जलिस्ते कपिलकुलिकयोः स्तौति च स्वस्तिकस्त्वाम् ।।२४।। कुशिको मुनिभेदे स्यात् फाले सर्जे विभीतके । कुष्णाति कुशिकः "कुशिक हृदिक" (उ० ४५) इति साधुः । चतुर्षु अर्थेषु । मुनिभेदे यथा— यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्द्धनः । फाले यथा—दारयन् कुशिके नोर्वीं सर्जविभीतकौ वृक्षौ । क्षुल्लकः पामरे स्वल्पे कनिष्ठे दुःस्थिते खले । क्षुणत्ति क्षुद्यते वा क्षुल्लकः । "कीचक पेचक" (उ० ३३) इति साधुः । क्षुधं लाति वा क्षुल्लः । स्वार्थे के क्षुल्लकः । पञ्चस्वर्थेषु वाच्यलिङ्गः । सर्वेषु यथा—राजन्ना जगत्त्रयीमल्ल त्वत्तोऽन्ये क्षुल्लका नृपाः । क्षुद्रशङ्खेऽपि ।।२५।। कूचि(चि)काक्षीरविकृतौ कुञ्चिकायां च कुड्मले । आलेख्यकूचिकासूच्योः । कोचति कूचिका । "कुशिक"--इति साधुः । पञ्चस्वर्थेषु । क्षीरविकृतौ यथा—कुचिका पित्तनाशिका । कुञ्चिकायां यथा—कूचिका रन्ध्रसम्बन्धे यथा किलकपाटयोः । कुड्मलं मुकुलम् । आलेख्यकूचिका चित्रतूलिका । सूचि केतकाद्यग्रभागः । सीवनी च । कृषकौ फालकर्षकौ । कृषति कृषकः । "कृषेर्गुणवृद्धी च वा" (उ० ३१) इति किदकः । फालः कुशिकः । कर्षकः कुटुम्बी । द्वयोर्यथा—कृषन्ति कृषकाः क्षेत्रं कर्षोत्कर्षपवित्रितम्



कुशिको मुनिभेदे स्यात्फाले सर्जे विभीतके ।
क्षुल्लकः पामरे स्वल्पे कनिष्ठे दुःस्थिते खले ।।२५।।

*कूचिका क्षीरविकृतौ कुञ्चिकायां च कुड्मले ।
आलेख्यकूचिकासूच्योः कृषकौ फालकर्षकौ ।।२६।।

कोरकं तु कुड्मले स्यात्कत्कोलकमृणालयोः ।
कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ।।२७।।

।।२६।। कोरकं तु कुड्मले स्यात्कत्कोलकमृणालयोः । कुरति कोरकम् । "दृ कृ नृ" (उ० २७) इति अकः । पुंक्लीबः । कुड्मले यथा—मरुदवनिरुहांरजो वधूभ्यः समुपहरन् विचकार कोरकाणि । कल्कोलको वृक्षः । मृणालं बिसम् । कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्यात (स्थाने) मङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च । कूयते कौतुकम् । "कञ्चुकांशुक" (उ० २७) इति साधुः । कुतुकमेव वा प्रज्ञादित्वादण् । कुतुकस्य भावो वा युवादित्वादण् । नवस्वर्थेषु । नर्मणि यथा—गङ्गां सपत्नीमिव कौतुकेन सन्दर्शयन्मूर्द्धिन शिवः शिवायाः । इच्छायां यथा—बाहुर्मे रणकौतुकी । उत्सवे यथा—विवाहकौतुके ताभ्यां यौतकं नृपतिर्ददौ । कुतुके कौतूहले यथा—निजकरतलरङ्गे नर्त्तितः कौतुकेन । मुदि हर्षे यथा—कौतुकोत्फुल्ललोचनाः ।।२७।। पारम्पर्यागत ख्यात मङ्गले यथा--वैवाहिकैः कोतुकसंविधानैर्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् । उद्वाहसूत्रे यथा--अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः । गीतादौ यथा--नार्यो जगुर्मङ्गलकौतुकानि । भोगकाले यथा—अङ्गनाकौतुकेऽनङ्गः प्रत्यङ्गं संचचार सः । कौशिकः

* प्र० कूपको गुणवृक्षे स्यात्तैलपात्रे ककन्दरे । कुचिका० ।

**पारम्पर्य्यागतख्यातमङ्गलोद्वाहसूत्रयोः ।**
**गीतादौ भोगकाले च कौशिकः शक्रघूकयोः ॥२८॥**
**कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ ।**
**कौशिकी चण्डिकानद्योः खनकः सन्धितस्करे ॥२९॥**
**मूषिके भूमिवित्तज्ञे खट्टिको मांसविक्रयी ।**
**महिषीक्षीरफेनश्च खुल्लकः स्वल्पनीचयोः ॥३०॥**

शक्रघूकयोः । कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ । कुशिकस्यापत्यं कौशिकः । विदादित्वादञ् । कौशेते वा "कुशिक हृदिक" (उ० ४५) इति साधुः । कोशो भाण्डागारं प्रयोजनमस्येति वा "प्रयोजनम्" ६/४/११७ । इति इकण् । शक्रे घूके च यथा—प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥२८॥ कोशज्ञे भाण्डागारज्ञे यथा—कोशिनीयानकौशिकाः । गुग्गुलौ यथा—अगुरुतुरुष्ककौशिकवररोचना धूपामोदप्रियः । आहितुण्डिके नकुले च यथा—तुरग इव कौशिकात्स बिभ्यत् । मुनौ विश्वामित्रे यथा—कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये । कौशिकी चण्डिकानद्योः । द्वयोर्यथा—कौशिकी श्रेयसेऽस्तु वः । खनकः सन्धितस्करे ॥२९॥ मूषिके भूमिवित्तज्ञे । खनति खनकः । "नृतखन्रञ्जः शिल्पिन्यकट्" । ५/१/६५ । सन्धितस्करः सुरङ्गाचौरः ॥२९॥ मूषिक आखुः । भूमिवित्तज्ञो निधानवेत्ता । त्रिष्वपि यथा—खन्यन्ते खनिकैर्भुवः । जलाधारेऽपि मंखः । तत्र च स्त्रियां यथा—वनिका खनिका रथ्या प्रपा सत्रावरोहणम् । खट्टिको मांसविक्रयी । महिषीक्षीरफेनश्च । खट्टण् सम्वरणे । खट्टयति खट्टिकः । "कुशिक" (उ० ४५) इति साधुः । मांस-



**खोलकः पूगकोशे स्याच्छिरस्त्रे नाकुपाकयोः ।**
**ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे ॥३१॥**
**ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः ।**
**गण्डको विघ्ने विद्यायां सख्यावच्छेदखड्गिषु ॥३२॥**

विक्रयिणि यथा—सेयं खट्टिकहट्टिका परिलुठत्पापिष्ठवण्ठाकुला । खुल्लकः स्वल्पनीचयोः । खद् हिंसायां च खद्यते खुल्लकः । "कीचक" (उ० ३३) इति साधुः । वाच्यलिङ्गः । द्वयोर्यथा—क्षीवः खेलति खुल्लकः ॥३०॥ खोलकः पूगकोशे स्याच्छिरस्त्रे नाकुपाकयोः । खलति खोलकः । "कीचक" (उ० ३३) इति साधुः । पूगकोशः पूगपुटम् । शिरस्त्रं शिरस्त्राणम् । नाकुर्वल्मीकः । पाको डिम्भः । सर्वेषु यथा—नरोऽयं नगवद्भाति मौलिलालितखोलकः । ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे । ग्रन्थिरत्रास्ति ग्रन्थिकम् । व्रीह्यादित्वादिकः । ग्रन्थिरेव वा । ग्रन्थोऽस्यास्ति वा । "अतोऽनेकस्वरात्" ७/२/६ । इति इकः ॥३१॥ ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः । गुग्गुलकरीरौ वृक्षौ । दैवज्ञो गणकः । माद्रेयः (नकुलोऽपि) सहदेवः । गण्डको विघ्ने विद्यायां संख्यावच्छेदखड्गिषु । गण्डति गण्डकः । पञ्चस्वर्थेषु । विघ्ने यथा—चण्डि खण्डय गण्डकान् । विद्या विद्याविशेषः । संख्याविशेषश्चत्वारः कपर्दकाः । अवच्छेदे पर्वणि तु स्त्रियाम्, लक्ष्यं यथा—इक्षोः क्षेत्रे द्विपेन्द्रावलिकवलकृते गण्डिकाः खण्डयन्ति । उपधानेऽपि मंखः । तत्र खड्गिनि एकशृङ्गे च यथा—शय्येव विन्ध्यवसुधागरुगण्डकाद्या ॥३२॥ गण्डकी तु सरिद्भेदे । गौरादित्वाद् ङीः । यथा—सिप्रावेत्रवती महासरिदिति ख्याता च या गण्डकी । गणको ग्रहवेदिनि । गणयति गणकः ।

गण्डकी तु सरिद्भेदे गणको ग्रहवेदिनि ।
गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति ॥३३॥

ग्राहको ग्रहीतरि स्याद् व्याधानां घातिपक्षिणि ।
गान्धिको लेखके गन्धवाणिजे गुण्डकः पुनः ॥३४॥
कलोक्तौ मलने धूलौ स्नेहपात्रेऽथ गैरिकम् ।
स्वर्णे धातौ गोलकस्तु जारतो विधवासुते ॥३५॥

वाच्यलिङ्गः । यथा—गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः । गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति । चतुर्ष्वर्थेषु स्त्रियाम् । इभ्यां हस्तिन्यां यथा—आरुह्य सप्रगुणितां गणिकां नरेन्द्रः । यूथिका पुष्पलता । तर्कारी ओषधिः । पण्ययोषिति यथा—स्वगुणैराफलप्राप्तेराकृष्य गणिका इव ॥३३॥ ग्राहको ग्रहीतरि स्याद् व्याधानां घातिपक्षिणि गृह्णाति ग्राहकः । ग्रहीतरि वाच्यलिङ्गः । तत्र यथा— न गुणग्राहको जनः । व्याधसम्बन्धे निहिंस्रे पक्षिभेदे श्येनादौ यथा—नाहं ग्राहकपञ्जरं पुनरिदं गृह्णाति जीवन्नहो । गान्धिको लेखके गन्धवाणिजे । गन्धो बालः प्रयोजनमस्य गान्धिकः । "प्रयोजनम्" ६/४/११७ । इति इकण् । गन्धः पण्यमस्येति वा । "तदस्य पण्यम्" ६/४/५४ । इति इकण् । द्वयोर्यथा—नानापत्रौघमेते मुकुलितनयना गान्धिकाः शोधयन्ति । गुण्डकः पुनः कलोक्तौ मलने धूलौ स्नेहपात्रे । गुण्ड्यतेऽनेन गुण्डकः । "नाम्नि पुंसि च" ५/३/१२१ । इति णकः । चतुर्ष्वर्थेषु ॥३४॥ कलोक्तिर्मधुरभणितिः । मलनं धारणम् । धूलिः पांसुः । स्नेहपात्रं कुतुपादि । अथ गैरिकम् ॥ स्वर्णे धातौ । गिरौ भवं गैरिकम् । गिरिणा विग्रहो गिरिका तु "भवे" ६/३/१२३ । इत्यण् । अव्यधिकन्यायेन



अलिञ्जिरे गुडे चापि गोरङ्कुर्नग्नबन्दिनोः ।
खगे च चषको मद्ये सरके मद्यभाजने ॥३६॥

चलुकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा ।
चारकोऽश्वादिपाले स्याद्बन्धे संचारिकेऽपि च ॥३७॥

अध्यात्मादित्वाद् वा इकण् । स्वर्णे यथा—गैरिकाद्रौ ययाविन्द्रः । धातौ यथा— क्रुधा दधत्तनुमतिलोहिनीमभूत्प्रसेनजिद्गज इव गैरिकारुणः । गोलकस्तु जारतो विधवासुते । अलिञ्जिरे गुडे चापि । गुडति गोलकः । गोल एव वा स्वार्थेकः । जारेण यो विधवायां जातः स गोलकः । यत्स्मृतिः अमृते जारजः कुण्डो मृते भर्तरि गोलकः ॥३५॥ अलिञ्जरो मणिकः । तत्र यथा—घोलं गोलकगह्वरेषु परतो न्यस्यन्ति गोष्ठाङ्गनाः । गुडः सर्वतो वृत्तः । तत्र यथा—कदम्बगोलकाकारम् । गोरङ्कुर्नग्नबन्दिनोः । खगे च । गोभिर्वचनैर्जलैर्वा रमते गोरङ्कुः । "कैशीशमि" (७४९ उ०) इति कुः । नग्नो विवस्त्रः । तत्र वाच्यलिङ्गः । शेषयोः पुंसि । बन्दीसूतः । खगः पक्षिविशेषः । चषको मद्ये सरके मद्यभाजने । चषन्ति अनेन चषकः । "दृ कृ नृ" (उ० २७) इत्युकः । पुंक्लीबः । मद्यं धान्यपिष्टोद्भवम् । सरक ऐक्षवः । तयोर्यथा—चषकपानकलालसमानसः । मद्यभाजने यथा – फुल्लदृष्टिवदनं वनितानामब्जचारुचषकं च षडङ्घ्रिः । चलुकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा । चलति चुलुम्पति च चलुकः । चुलुकः । "कञ्चुकांशुक" (उ० ५७) इति साधुः । प्रसृतौ चुलुकः । स्त्रीपुंसः । प्रसृतौ यथा—अगस्ति चुलुकोत्क्षिप्त—सप्तवारिधिवारिणि । भाण्डप्रभेदो भाजनविशेषः । चुलुकशब्द आदिपुरुषेऽपि । यथा चुलुकस्यापत्यं

**चित्रकस्तु चित्रकाये द्रुमौषधविशेषयोः ।**
**चुम्बकः कामुके धूर्ते बहुगुर्वश्मभेदयोः ॥३८॥**
**चुलुकी कुण्डिकाभेदे शिशुमारे कुलान्तरे ।**
**चूतकः कूप आम्रे च चूलिका नाटकाङ्गके ॥३९॥**

वृद्धं चौलुक्यः । चारकोश्वादिपाले स्याद्बन्धे संचारकेऽपि च । चारयति चारकः । बन्धे कारायां पुंसि । शेषयोर्वाच्यलिङ्गः । अश्वादिपाले यथा हरिर्गोवृन्दचारकः । बन्धे यथा—संचारश्चारके कुतः । संचारके यथा—सारणीवारिचारकः ॥३७॥ चित्रकस्तु चित्रकाये द्रुमौषधविशेषयोः । चित्र एव चित्रकः । तिलकेऽपि । तत्र तु क्लीबे । तत्र चित्रकाये श्वापदे च यथा—नियतं दधते च चित्रकैरवियोगं पृथुगण्डशैलतः । औषधविशेषे यथा—मुमूर्षोः किन्तवामीभिश्चव्यचित्रकनागरैः । औषधविशेषे नपुंसकोऽयमितिलिङ्गविदः । चुम्बकः कामुके धूर्ते बुहुगुर्वश्मभेदयोः । चुम्बती चुम्बकः । चतुष्वर्थेषु । अश्मभेदे पुंसि । शेषेषु वाच्यलिङ्गः । कामुकेऽश्मभेदे च यथा—वेश्या लोहशलाकेव जवाच्चुम्बति चुम्बकम् । धूर्तो वञ्चकः । बहवो गुरवो यस्य स बहुगुरुः ॥३८॥ चुलुकी कुण्डिकाभेदे शिशुमारे कुलान्तरे । चुलुम्पति चुलुकी । "कञ्चुकांशुक" (उ० ५७) इति साधुः । गौरादित्वाद्ङीः । कुण्डिकाभेदो जलभाजनविशेषः । शिशुमारो जलजन्तुविशेषः । कुलान्तरम् अन्वयभेदः । चूतकः कूप आम्रे च । चत्यते चूतकः । "कीचक पेचक" (उ० ३३) इति साधुः । चूत एव वा स्वार्थेकः द्वयोर्यथा—चूतकानां रसं पीत्वा पान्थाः पथि सुखं ययुः । चूलिका नाटकाङ्गके । करिणः कर्णमूले च । चूलैव चूलिका स्वार्थेकः । नाटकाङ्गके यथा—



**करिणः कर्णमूले च जनकः पितृभूपयोः ।**
**जम्बुके वरुणे फेरौ जतुकं हिङ्गुलाक्षयोः ॥४०॥**
**जतुका चर्मचटका जीविको वृद्धजीविनी ।**
**क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे ॥४१॥**

विष्कम्भचूलिकाकास्यांकावतारप्रवेशकैः ॥३९॥ करिणः कर्णमूले यथा—रेजे व्यालावली लोला चूलिका चुम्बिचामरा । जनकः पितृभूपयोः । जनयति जनकः पितरि यथा—जनकोऽसि जनार्दन स्फुटं धर्मार्थितया मनोभुवः । भूपे भूपविशेषे यथा—जनकतनया स्नान पुण्योदकेषु । जम्बुके वरुणे फेरौ । जमति जम्बुकः । "कञ्चुकांशुक" (उ० ५७) इति उके साधुः । नीचेऽपि । सर्वेषु यथा—सत्यं पौलस्त्यसिंहस्यजम्बुकः पश्चिमापतिः । जतुकं हिङ्गुलाक्षयोः । जतु एव जतुकम् हिङ्गुरामठम् । तत्र यथा—उपयुज्यते हि शाकेषु जतुकं न तु मूर्द्धनि । लाक्षायां यथा—सन्धानं सज्जनेनेव जतुके नैव जन्यते ॥४०॥ जतुका चर्मचटका । जतुप्रतिकृतिर्जतुका । "तस्य तुल्ये" ७—१—१०८ । इति कः । जीवको वृद्धजीविनि । क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे । व्यालग्राहे । जीवति जीवयति जीवकः । द्रुमक्षपणकपीतसालेषु पुंसि । शेषेषु वाच्यलिङ्गः । वृद्धिजीवी कलान्तरजीवी । क्षपणः श्रमणः । प्राणकः प्राणिता । प्राणदायको वा । पीतसालोऽसनः । सेवकोऽनुजीवी । द्रुमो बन्धूकद्रुमः ॥४१॥ व्यालग्राह आहितुण्डिकः । तत्र यथा—विषयविषहतानां जीवकस्त्वं पुरारे । शेषेषु यथा—जीवकस्येदृशी गतिः । जीविका तु जीवन्त्यां वर्तनेऽपि च । जीवनं जीविका भावे णकः । जीवन्ती मधुस्रवा । वर्तने यथा—बुद्धिपौरुषहीनानां जीविकेति

**व्यालग्राहे जीविका तु जीवन्त्यां वर्तनेऽपि च ।**
**झिल्लिका झिलिकेव स्याच्चीर्यां रुच्यातपस्य च ॥४२॥**
**विलेपनस्य च मले तक्षकस्तक्षिण पन्नगे ।**
**द्रुमभेदे तण्डकस्तु समस्तपदजातके ॥४३॥**

**तरुस्कन्धे वेश्मदारु मायाबहुलयोरपि ।**
**फेनखञ्जनयोश्चापि तारकः कर्णधारके ॥४४॥**

बृहस्पतिः । झिल्लिका झिलिकेव स्याच्चीर्यां रुच्यातपस्य च । विलेपनस्य च मले । झमति ज्वलति वा झिल्लिका झिलिका च । "कुशिक हृदिक" (उ० ४५) इति साधुः । चीरी पक्षिभेदः । आतपस्यरुक् अतिशयेन दीप्यतेत्यर्थः ॥४२॥ विलेपनस्य मल उद्वर्तनिका । तक्षकस्तक्षिण पन्नगे । द्रुमभेदे । तक्षति तक्षकः । तक्षिणवर्द्धकौ यथा—तक्ष्णोति तक्षक इव दुर्वाक्यैर्दुर्जनो जनम् । पन्नगे पन्नगभेदे यथा—कर्कोटः कोटिःकृत्वः प्रणमति पुरतस्तक्षके देहि चक्षुः । द्रुमभेदो वृक्षविशेषः । तण्डकस्तु समस्तपदजातके । तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि । फेनखञ्जनयोश्चापि । तडुड् ताडने तण्डते तण्डकः । पञ्चस्वर्थेषु । समस्तपदजातके पुंक्लीबः । समस्तं कृतसमासं पदानां जातकं समूहः समस्तपदजातकम् ॥४३॥ तरुस्कन्धस्तरुसमूहः । वेश्मार्थं दारु काष्ठं वेश्मदारु । मायावहुलो मायाप्रधानः । तत्र वाच्यलिङ्गः । फेनो डिण्डीरः । खञ्जनः खञ्जरिटः । सर्वेषु यथा—समुद्रवेला वनालीव अनेकतण्डकाकुला दमयन्तीकथा । तारकः कर्णधारके । दैत्ये च । तरति तारयति वा तारकः । कर्णधारके यथा—भ्रान्तस्तीर्थानि दृष्टस्त्वं मयैकस्तेषु तारकः ॥४४॥ दैत्ये यथा—तस्मिन् विप्रकृताः काले तारकेण दिवौकसः । तारकमुडौ



**दैत्ये च तारकमुडौ नेत्रतन्मध्ययोरपि ।**
**तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके ॥४५॥**
**तिलकं रुचके क्लोम्नि त्रिशङ्कुः शलभे नृपे ।**
**मार्जारे च तुरुष्कस्तु देशे श्रीवाससिह्लयोः ॥४६॥**

नेत्रतन्मध्ययोरपि । उडौ त्रिलिङ्गः । नेत्र *मध्ये स्त्रीक्लीबः नेत्रे क्लीबे । त्रिष्वपि यथा—निशाकरकरस्पर्शहर्षोन्मीलिततारका । अहो रागवतीसंध्या मुञ्चति ×स्वयमम्बरम् । तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके । तिलति स्निह्यति तिलकः । "ध्रुधून्दि" (उ० २९) इति किदकः । पुण्ड्रके पुंक्लीबः । अश्वभित् तिलकितो हयः । द्रुमभिदि पुण्ड्रके च यथा—न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव । तिलकालको देहे कृष्णं लक्ष्म ॥४५॥ तिलकं रुचके क्लोम्नि । रुचकं सौवर्चलम् । क्लोम हृदयस्य दक्षिणे उदर्यो जलाधारः । त्रिशङ्कुः शलभे नृपे । मार्जारे च । त्रयः शङ्कवोऽस्य त्रिशङ्कुः । पुंसि । शलभः पतङ्गः । नृपे नृपभेदे यथा—त्रिशङ्कोरुपभोगाय न द्यौरपि न भूरपि । मार्जारो बिडालः । तुरुष्कस्तु देशे श्रीवाससिह्लयोः । तूर्यते तुरुष्कः । "निष्क तुरुष्क" (उ०२६) इति साधुः । सिह्ले स्त्रीपुंसः । देशे यथा—शुष्कमुष्कस्तुरुष्केशो भीत्या तव धराधव । श्रीवाससिह्लौ धूपौ ॥४६॥ तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी । तूलति तूलिका तूलं निरस्थिकर्पासादि तस्य शय्या । तत्र यथा—सुखेन सुप्तोऽपि स तूलिकायाम् । आलेख्यस्य चित्रस्य लेखन्यां यथा—उन्मीलितं तूलिकयेव

* यद्यपि प्रतिपदपदपाठेन स्त्रीक्लीबत्वंनोक्तं तथापि अनेकार्थेषु दृष्टम् ।
× वस्त्रं खञ्च ।

**तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी ।**
**दर्शको दर्शयितरि प्रतिहारप्रवीणयोः ।।४७।।**
**द्रावकस्तु शिलाभेदे स्याद्घोषकविदग्धयोः ।**
**दारको भेदके पुत्रे दीपकंस्यादलङ्कृतिः ।।४८।।**
**दीपकौ दीप्तिकृद्दीपौ दीप्यकं त्वजमोदके ।**
**मयूरशिखायवान्योर्धनिको धान्यके धवे ।।४९।।**

चित्रम् । शलाकायामपि मङ्खः । यथा—गृहीत्वाञ्जनतूलिकाम् । दर्शको दर्शयितरि प्रतीहारप्रवीणयोः । दर्शयति पश्यति वा दर्शकः । दर्शयितृ प्रवीणयोर्वाच्यलिङ्गः । दर्शयितरि यथा—यथा—गुरवो मार्गदर्शकाः । प्रतीहारे प्रवीणे च यथा—दर्शकजननिवार्यमाणकलकलमास्थानम ।।४७।। द्रावकस्तु शीलाभेदे स्याद्घोषकविदग्धयोः । द्रावयति द्रवति वा द्रावकः । घोषक विदग्धयोर्वाच्यलिङ्गः । शिलाभेदः औषधम् । धोषकः पुनः पुनर्वाक्यावर्त्तकः । विदग्धे यथा—द्रावयन्ति मनोभर्त्तुर्द्रावकाः केऽपि सेवकाः । दारको भेदके पुत्रे । दारयति दारकः । भेदके वाच्यलिङ्गः । द्वयोर्यथा—नरेन्द्रदारकः सोऽयं मानिनीमानदारकः । दीपकं स्यादलङ्कृतिः । दीपयति दीपकम् । अलङ्कृतिरर्थालङ्कार विशेषः । यदाह—सकृद्वृत्तिस्तु धर्मस्य प्रकृता प्रकृतात्मनाम् । सैवक्रियासु बह्वीषु कारकस्येति दीपकम् । दीपकौ दीप्तिकृद्दीपौ । दीप्तिकृति वाच्यलिङ्गः । द्वयोर्यथा— शरणमात्मभये निशि दीपकः । पक्षिभेदेऽपि । यदाह—पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपकः । दीप्यकं त्वजमोदके । मयूर शिखायवान्योः । दीप्यते दीप्यकम् । "कीचक" (उ० ३३) इत्यके साधुः । त्रयोऽप्यौषधभेदाः । धनिको धान्यके धने धनाढ्ये । धनमस्त्यस्य



**धनाढ्ये धनिका वध्वां धेनुका धेनुरिभ्यपि ।**
**धैनुकं धेनुसंहत्यां करणेऽपि च योषिताम् ।।५०।।**
**नरकौ दैत्यनिरयौ नन्दकः कुलपालके ।**
**हर्षके विष्णुखड्गे च नर्तकः केलके नटे ।।५१।।**

धनिकः । धान्यकं कुस्तुम्बुरु । धवो भर्त्ता ।।४९।। धनाढ्ये धनवति वाच्यलिङ्गः । तत्र यथा—धनिकेन धनं दत्तमधमर्णाय वर्द्धते । धनिका वध्वाम् । वधूः पत्नी । धेनुका धेनुरित्यपि । धेनुरेव धेनुका । धेनुर्नवप्रसूता । तत्र यथा—सा धेनुका दुग्धनिधानभूमिः । इभी हस्तिनी तस्यां यथा—आरुह्य वरधेनुकाम् । क्षुरिकायामपि मङ्खः । यथा — यौधैर्बद्धासि धेनुकैः । दैत्यविशेषेऽपि ।० तत्र पुंलिङ्गः । धेनुकं धेनुसंहत्यां करणेऽपि च योषिताम् । धेनूनां समूहो धैनुकम् । धेनोरनञ्ः । ६–२–१५ । इति इकण् धेनुकाया इदं वा । "तस्येदम्" ६–३–१६० । इति अण् । धेनुसंहत्यां यथा—तद्धैनुकं ध्यायति माधवस्य । योषितां करणं वात्स्यायनप्रसिद्धम ।।५०।। नरकौ दैत्यनिरयौ । नृणाति नरकः । "दृ कॄ नॄ" (उ० २७) इति अकः । द्वयोर्यथा—सत्यानुरक्तं नरकस्य जिष्णवो गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः । नन्दकः कुलपालके । हर्षके विष्णुखड्गे च । नन्दयतीति नन्दकः । कुलपालकहर्षयोर्वाच्यलिङ्गः । हर्षके विष्णुखड्गे च यथा—नाम्नाऽपि तस्यैव स नन्दकोऽभूत् । नर्तकः केलके नटे । द्विपे पोटगले चापि । नृत्यति नर्तकः । णकः । नटे तु "नृत्खन्रञ्जः शिल्पिन्यकट्" ५–१–६५ । केलके क्रीडके वाच्यलिङ्गः । नटे यथा—नर्तकेनैव नर्त्तिताः ।।५१।। द्विपो हस्ती । पोटगलः काशः । नर्तकी लासिका द्विपी । लासिकायां यथा—द्वौ सङ्कीर्णौ रचयति

**द्विपे पोटगले चापि नर्तकी लासिका द्विपी ।**
**नालीकोऽब्जे शरे शल्ये नालीकं पद्म तद्वने ॥५२॥**
**नायको मणिभिन्नेतृ प्रधानेष्वथ नालिका ।**
**नाले काले चुल्लिरन्ध्रे विवरे वेणुभाजने ॥५३॥**
**निपाकः पचने स्वेदासत्कर्मफलयोरपि ।**
**निर्मोको व्योम्नि सन्नाहे मोक्षके सर्पकञ्चुके ॥५४॥**

रसौ नर्त्तकीव प्रगल्भा । नालीकोऽब्जे शरे शल्ये । णल् गन्धे । नलति नालीकः । "सृणीकास्तीक" (उ० ५०) इति साधुः । अब्जे वाच्यलिङ्गः । तत्र यथा—विवृतेनापि शास्त्रेण नालीकः किं करिष्यति । शरे शल्ये च यथा—भूपालमौलिना तेन नालीकैः कीलितं बलम् । नालीके पद्म तद्वने । पद्मे पुंक्लीबः । तत्र यथा—नालीकमालां मलते स मौलौ । तेषां पद्मानां वनं तद्वनम् ॥५२॥ नायको मणिभिन्नेतृ प्रधानेषु । नयति नायकः । नेतृप्रधानयोर्वाच्यलिङ्गः । त्रिष्वपि यथा—एकार्थतन्तुप्रोतायां नायको नायकायते । अथ नालिका । नाले काले चुल्लिरन्ध्रे विवरे वेणुभाजने । नाल्येव नालिका । नलति वा । पञ्चस्वर्थेषु नाले यथा—पीतं नालिकया जलम् । काले यथा—क्षणैः षड्भिश्च नाडिका । वेणुभाजने यथा—धान्यावापं विदधतितरां हालिका नालिकाभिः । निपाकः पचने स्वेदासत्कर्मफलयोरपि । निपचनं निपच्यतेऽनेन वा निपाकः । पचने यथा—जातस्तकः(तः)शाकनिपाककालः । स्वेदो घर्माम्बु । असत्कर्मफलं दुष्कर्मफलम् । निर्मोको व्योम्नि सन्नाहे मोक्षके सर्पकञ्चुके । निर्मुच्यतेऽनेन निर्मोकः । व्योयोम्नि यथा—निर्मोककोकनदतुल्यमिदं वचस्ते । मोक्ष एव मोक्षकः । तत्र सन्नाहे च यथा—शोकमोहपरोलोकः स्तोको निर्मोक तत्परः ।



***पर्यङ्को मञ्चपर्यस्त्योः प्रतीकोऽङ्गप्रतीपयोः ।**
**पताकाङ्कध्वजे केतौ सौभाग्ये नाटकांशके ॥५५॥**
**पातुको जलमातङ्गे पतयालुप्रपातयोः ।**
**प्राणको जीवकतरौ सत्वजातीयबोलयोः ॥५६॥**

सर्पकञ्चुके यथा—वेल्लनिर्मोकवल्लीनिबिडनिगडितानोकहक्रोडनीडक्रीडन्निःशङ्कघूकव्यतिकरमुखराभूमयो भीषयन्ति ॥५४॥ पर्यङ्को मञ्चपर्यस्त्योः । पर्यच्यते पर्यंकः । परिगतोऽङ्कम्वा । मञ्चे यथा—नागपर्यङ्कशायी । पर्यस्तौ परिकरे यथा—पर्यङ्कबन्धस्थिरपूर्वकायम् । प्रतीकोऽङ्गप्रतीपयोः "प्रातिप्रतीकः सृणीक" इति साधुः । प्रतीपे वाच्यलिङ्गः । अङ्गम् अवयवः । तत्र यथा—प्रति प्रतीकं प्रविभूषितायाः । प्रतीपे प्रतिकूले यथा—क्षितिधव तव हस्ती सुप्रतीकप्रतीकः । प्रदीपेऽपि यथा—प्रतीकाभीशुनीकाभिस्तमिस्रे सकलीकृते । पताकाङ्कध्वजे केतौ सौभाग्ये नाटकांशके । पतति पताका । "शलिवलि" (उ०३४) इति आकः । अङ्कध्वजश्चिन्हध्वजः । तत्र यथा—पताकाभिर्वितर्यन्ते निकेताः पृथिवीभुजाम् । केतौ सोभाग्ये च यथा—रस्या इति प्राप्तवतीः पताकां रागं विविक्ता इति वर्द्धयन्ती । नाटकांशके यथा—बीजं बिन्दुः पताका च प्रकरीकार्यलक्षणाः । अर्थप्रकृतयः पञ्च ता एताः परिकीर्त्तिताः ॥५५॥ पातुको जलमातङ्गे पतयालुप्रपातयोः । पतनशीलः पातुकः । "लषपतपदः" ५–२–४१ । इति उकण् । पतयालौ वाच्यलिङ्गः । जलमातङ्गो जलहस्ती । पतयालौ यथा—भेजेऽभितः पातुकसिद्धिसिन्धोरभूत-

* मु० मू० । नीलिका नीलिनी क्षुद्ररोगशेफालिकास्वपि । पराकस्तु व्रते खड्गे प्रसेकः सेचने च्युतौ ॥ पर्यङ्को०

**पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके ।**
**वाद्यभेदे महाकिष्कौ मूल्यस्यापचयेऽपि च ॥५७॥**
**पालङ्कः शाकभेदे स्यात्सल्लकयां पाजिपक्षिणि ।**
**पिनाकः शिवकोदण्डे पांसु वृष्टित्रिशूलयोः ॥५८॥**

पूर्वां रुचमम्बुराशेः । प्रपातो भृगुः । सौप्तिकं वा । प्राणको जीवकतरौ सत्वजातीयवोलयोः । प्राणिति प्राणकः । प्राण एव वा । जीवकतरुर्वृक्षभेदः । सत्वजातीयः सत्वप्रकारः तत्र वाच्यलिङ्गः । वोलो गन्धरसः ॥५६॥ पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके । वाद्यभेदे महाकिष्कौ मूल्यस्यापचयेऽपि च । पाटयति पटति वा पाटकः । पञ्चस्वर्थेषु । रोधस्तटम् । ग्रामैकदेशे यथा–जलौकः काङ्क्षया याति साधुश्चण्डालपाटकम् । अक्षादीनां द्यूते पातयिता अक्षादिपातकः । वाद्यभेदो वादित्रम् । महाकिष्कुः प्रमाणविशेषः । मूल्यस्यापचये यथा–पाटकेनाप्यते कर्म ॥५७॥ पालङ्कः (पालकं) शाकभेदे स्यात्सल्लक्यां पाजिपक्षिणि । पाल्यते पालङ्कः । "निष्क तुरुष्क" (उ० २६) इति साधुः । शाकभेदे यथा–पालङ्कशाकं सुकृती न भुङ्क्ते । सल्लकी गजप्रिया । पाजिपक्षी पक्षिभेदः । पिनाकः शिवकोदण्डे पांसुवृष्टित्रिशूलयोः । पिनष्टि पिनाकः । "पिषेः पिन् पिण्यौ च" (उ० ३६) इति आकः । पुंक्लीबः । शिवकोदण्डे यथा–कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये । पांसुवृष्टिर्धूलिवृष्टिः । त्रिशूलं शैवमेवात्र ॥५८॥ प्रियकस्तु चञ्चरीके नीपे कश्मीरजन्मनि । प्रियङ्गौ चित्रहरिणे पीतसालतगेर(राव)पि प्रियं कायति प्रियकः । प्रीणाति वा । "कीचक" (उ० ३३) इति साधुः । चञ्चरीके भ्रमरे स्त्रीपुंसः । नीपः



**प्रियकस्तु चञ्चरीके नीपे कश्मीरजन्मनि ।**
**प्रियङ्गौ चित्रहरिणे पीतसालतरोरपि ॥५९॥**
***पिष्टको नेत्ररोगे स्याद् धान्यादिचमसेऽपि च ।**
**पिण्याकः कुङ्कुमे हिङ्गौ सिह्लके तिलचूर्णके ॥६०॥**
**पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे ।**
**अश्रुराज्यां मणिदोषे गल्वर्के तालके कृमौ ॥६१॥**

कदम्बः । कश्मीरजन्म घुसृणम् । प्रियङ्गुः फलिनी । चित्रहरिणे यथा–प्रचलितैः परितः प्रियकव्रजैः । पीतसालतरुरसनः । तत्र यथा–उन्निद्र प्रियकमनोरमं रमण्याः संरेजे सरसि वपुः प्रकाशमेव ॥५९॥ पिष्टको नेत्ररोगे स्याद्धान्यादिचमसेऽपि च । पिनष्टि पिष्यते वा पिष्टः । पिष्ट एव पिष्टकः । धान्यादेश्चमसे चूर्णविशेषे । यथा–कष्टेन पिष्टकैस्तैलं मौलेरुत्तार्यते तथा । पिण्याकः कुङ्कुमे हिङ्गौ सिह्लके तिलचूर्णके । पिनष्टि पिण्याकः । "पिषेः पिन् पण्यौ च" (उ० ३६) इत्याकः । पुंक्लीबः । कुङ्कुमे हिङ्गौ सिह्लके च यथा– पिण्याकगन्ध इव तुष्टिकृदस्य सोऽभूत् । तिलचूर्णे यथा – पिण्याकान्नाशिनीनांहि पयो गुरुतरं भवेत् । ॥६०॥ पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे । अश्रुराज्यां मणिदोषे गल्वर्के तालके कृमौ । पोलति पुलकः । "ध्रु धून्दि" (उ० २९) इति किदकः । अष्टस्वर्थेषु । गजान्नपिण्डे यथा–पुलककवललोलः खेलति व्यालराजः । रोमाञ्चे पुंक्लीबः । तत्र यथा–भृशस्विदः पुलकविकासिमूर्त्तयः । प्रस्तरान्तरे श्लक्ष्णपाषाणे यथा–पुलकपृष्टधौताम्बरः । अश्रुराजी नयनाम्बुधारा । मणिदोषे यथा–पुलकत्रासविद्धादिदोषैर्मणिरदूषितः । गल्वर्कश्चषकः । तालकं

*मु० मू०–पितकः स्यात्तु विस्फोटे मञ्जुषायामपीष्यते ।

**पुलाको भक्तसिक्थे स्यात्संक्षेपासारधान्ययोः ।**
**पुष्पकं मृत्तिकाङ्गारशकट्यां रत्नकङ्कणे ।।६२।।**
**कासीसेश्रीदविमाने नेत्ररोगे रसाञ्जने ।**
**लोहकांस्ये रीरिकायां पुत्रकः शरभे शठे ।।६३।।**

हरितालकम् (हरितालम्) (हरितालः)। क्रमौ कीटे यथा–वर्त्मनां पुलकवृश्चिकस्पृशाम् ।।६१।। पुलाको भक्तसिक्थे स्यात्संक्षेपासार-धान्ययोः। पोलति पुलाकः। "शुभिगृहि" (उ० ३५) इति किदाकः। भक्तसिक्थे यथा–स्थालीपुलाकन्यायेन कुर्याद् गुण परीक्षणम्। संक्षेपः क्षिप्रं तत्र यथा–पुलाककारी विपुलाशयः स्यात्। असारधान्ये यथा–पुलाका इव धान्येषु। पुष्पकं मृत्तिकाङ्गारशकट्यां रत्नकङ्कणे। कासीसेश्रीदविमाने नेत्ररोगे रसाञ्जने। लोहकांस्ये रीरिकायाम्। पुष्प्यति पुष्पकम्। पुष्पप्रतिकृतिर्वा अष्टस्वर्थेषु। मृन्मयी अङ्गारशकटी। मृत्तिका-ङ्गारशकटी। रत्नखचितं कङ्कणम् रत्नकङ्कणम् ।।६२।। सीसं धातुभेदः। श्रीदविमाने यथा–निरस्तगाम्भीर्य्यमपास्त-पुष्पकः प्रकम्पयामास न मानसं न सः। नेत्ररोगे यथा– असौ रसः पुष्पकनाशहेतुः। रसाञ्जनम् औषधभेदः। लोहेन मिश्रं कांस्यं लोहकांस्यम्। रीरिका पित्तलभेदः। पुत्रकः शरभे शठे शैवे वृक्षप्रभेदे च। पुत्रं कृणाति हिनस्ति पुत्रकः। "क्वचित्" इति डः। पुनाति वा। "कीचक" (उ० ३३) इति साधुः। कृत्रिमः पुत्रो वा। "तनु पुत्र" (७–३–२३) इति कः। शरभोऽष्टापदः। शठोऽनृजौ ।।६३।। शैवे शिवमतदीक्षिते च वाच्यलिङ्गः। शवे यथा–समयी साधकश्चव आचार्यश्चापि पुत्रकः। वृक्षप्रभेदः पुत्रप्रेम्णा सिक्तो वृक्षः। कृत्रिमसुतेऽपि यथा–



**शैवे वृक्षप्रभेदे च पुत्रिका यावतूलिके ।**
**पाञ्चालिकादुहित्रोश्च पूर्णकः स्वर्णचूर्णके ।।६४।।**
**पूर्णिका नासिकाच्छिन्न्यां पृथुकश्चिपिटेऽर्भके ।**
**पृदाकुश्चित्रकव्याघ्र–वृश्चिकेषु सरीसृपे ।।६५।।**

सा कन्दुकैः कृत्रिमपुत्रकैश्च। पुत्रिका यावतूलिके। पाञ्चालिका-दुहित्रोश्च। पुत्र्येव पुत्रिका। यावतूलकम् अलक्तपोलिका पाञ्चालिका काष्ठदन्तादिनिर्मिता स्त्रीप्रतिकृतिः तत्र यथा– तप्तायःपुत्रिकाः क्वापि स्मारितान्यवधूरतम्। दुहिता तनया। पूर्णकः स्वर्णचूर्ण(ड)के। पूर्ण एवेति पूर्णकः। स्वर्णचूडकः पक्षिविशेषः ।।६४।। पूर्णिका नासिकाच्छिन्न्याम्। नासिका छिन्ना यस्याः सा नासिकाच्छिन्नी। "स्वाङ्गादेरकृत" २–४–४६। इति ङीः। पृथुकश्चिपिटेऽर्भके। पृथुकायति पृथुकः। प्रथते वा। "कञ्चुकांशुक" (उ० ५७) इति साधुः। चिपिट आद्रसस्याभ्योषः। तत्र यथा–वृथा पृथुकमर्दनं हलभृता परार्थं कृतम्। अर्भके यथा–क्वचित्क्रीडक्रोडप्रतिभयपरित्रस्त-पृथुकाः। पृदाकुश्चित्रकव्याघ्रवृश्चिकेषु सरीसृपे। पिपर्त्ति पृदाकुः। "सृपृभ्यां दाकुक्" (उ० ७५६) चतुर्ष्वर्थेषु यथा–सदा पृदाकुः कुरुते हि शङ्काम् ।।६५।। पेचकः करिलाङ्गूलमूले घूके। पच्यते पेचकः। "कीचक पेचक" (उ० ३३) इति साधुः। करिलाङ्गूलमूले यथा–करीन्द्रो मेचकैः (करीन्द्रो वर्णकैः) सान्द्रै-र्मेचकीभूतपेचकः। घूके यथा–खं पेचकैः कञ्चुकितं रणेषु। अथ पेटकम्। मञ्जूषायां समूहे च। पेटति पेटकः। "छिदिभिदिपिटेर्वा" (उ० ३०) इति अकः। पेट एव वा। स्वार्थिककप्रत्य-यान्तस्तु समूहे त्रिलिङ्गः। मञ्जूषायां क्लीबे। पुल्लिङ्गोऽयमिति

पेचकः करिलाङ्गूलमूले घूकेऽथ पेटकम् ।
मञ्जूषायां समूहे च बहुको जलखादके ॥६६॥
दात्यूहे कर्कटेऽर्के च बन्धूकः पीतसालके ।
बन्धूजीवे बन्धकस्तु सत्यङ्कारेऽथ बन्धकी ॥६७॥
स्वैरिण्यां च करिण्यां च बालिकाकर्णभूषणे ।
पिञ्छोलायां वालुकायां बालायां *भस्मकं रुजि ॥६८॥

लिङ्गविदः । तत्र यथा—न्यधत्त वटपृष्ठतः कनकपेटकं तस्करः । समूहे यथा—घटितषट्पदपेटकपाटला । बहुको जलखादके दात्यूहे कर्कटेऽर्के च । बहु भक्ष्यं कं जलमस्य बहुकः । बहुः कायति वा । चतुर्ष्वर्थेषु । जलखादकदात्यूहौ पक्षिविशेषौ ॥६६॥ कर्कटः कुलीरः । अर्को रविः । बन्धूकः पीतसालके । बन्धूजीवे । बध्यते बन्धूकः । "मृमन्यञ्जि" इति कुकः (उकः)। पीतसालोऽसनः, बन्धुजीवे यथा—नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे । बन्धकस्तु सत्यङ्कारे×। बध्नाति बन्धकः । "दृ कृ नॄ" (उ० २७) इत्यकः । पुंसि । मङ्खस्तु कुलटेभी च बन्धकी । आधावस्त्री बन्धिकानुबन्धकारिणि वाच्यलिङ्गा इति पुंक्लीबत्वमाह । सत्यङ्कारे आधौ यथा—न वृद्धिर्बन्धके नष्टे सर्वनाशेन तद्वनम् । अथ बन्धकी । स्वैरिण्यां च करिण्यां च । गौरादित्वाद् ङीः ॥६७॥ स्वैरिण्यां यथा—बन्धक्यो यं प्रशंसन्ति स राजन् पुरुषोऽधमः । करिण्यां यथा—बन्धकी निकटमभ्रभूपतिः । बन्धकारिण्यपि संसारबन्धिका माया । बालिका कर्णभूषणे । पिञ्छोलायां वालुकायां वालायाम् । बाल्येव बालिका बलते

* बालकः पुनः शिशोमुर्खेऽश्वगजयोवलिधौ भस्मकं रुजि० ।
× अत्र आधिपर्य्यायः सत्यंकारो न तु लोकप्रसिद्धे सत्यंकारे ।



विडङ्गे कलधौते च भ्रामकः फेरुधूर्त्तयोः ।
सूर्य्यावर्त्तेऽश्मभेदे च भालाङ्कः कच्छपे हरे ॥६९॥
महालक्षणसम्पूर्णपुरुषे करपत्रके ।
रोहिते शाकभेदे च भूतीकं कटफलौषधे ॥७०॥

वा बालैव वा । कर्णभूषणे यथा—बिभ्रती तिलकं भाले श्रवसोः स्वर्णबालिकाम् ( कर्णभूषणेऽङ्गुलीये च पुंक्लीब इति लिङ्गविदः मङ्खाद्यनेकार्थेषु स्त्री । ) पिञ्छोला ओषधिः । अङ्गुलीयेऽपि मङ्खः । तत्र वालुकायां सिकतायां च यथा—सिन्धुर्वीचिकरानुवाहबहलप्रौढोल्लसद्बालिकान् । बालायां यथा—बालिकारचितवस्त्रपुत्रिकाक्रीडनेन सदृशं तदर्चनम् । कङ्कणेऽपि मङ्खः । यथा—बालिकाङ्कितप्रकोष्ठः । भस्मकं रुजि । विडङ्गे कलधौते च । भस्मयतीति भस्मकम् । भस्मप्रतिकृतिर्वा । रुजि रोगे यथा—भस्मके भस्मतां याति समस्तं भक्षितं यतः ॥६८॥ विडङ्गमौषधम् । कलधौतं रूप्यम् । ग्रहविशेषेऽपि । तत्र पुंसि । यथा—प्रतिपालय नाथ नाडिकाद्वितयं सम्प्रति भस्मकोदयः । भ्रामकः फेरुधूर्त्तयोः । सूर्य्यावर्त्तेऽश्मभेदे च । भ्रमति भ्रामकः बाहुलकाद् वृद्धिः । फेरुः शृगालः । धूर्त्तो वञ्चकः । तत्र वाच्यलिङ्गः । सूर्य्यावर्त्तोभेषजभेदः । अश्मभेदे यथा—भ्रामको भ्रमयत्ययः । भालाङ्कः कच्छपे हरे । महालक्षणसम्पूर्णपुरुषे करपत्रके । रोहिते शाकभेदे च । भालेऽङ्कोऽस्यासौ भालाङ्कः, भाल्यते वा । "मवाका" (उ० ३७) इति साधुः । कच्छपः कूर्मः । हरः शम्भुः ॥६९॥ करपत्रकं क्रकचम् । रोहितो मत्स्यभेदः । भूतीकं कटफलौषधे । यवान्यां घनसारे च भूनिम्बे भूस्तृणेऽपि च । भवति भूतीकम् । "सृणीक" (उ० ५०) इति साधुः ।

**यवान्यां घनसारे च भूनिम्बे भूस्तृणेऽपि च ।**
**भूमिका तु रचनायां रूपान्तरपरिग्रहे ॥७१॥**
**मशकः क्षुद्ररुग्जन्तुभेदयोर्मधुकं त्रपुः ।**
**मधुयष्टिश्च मधुको बन्दिश्रीवदपक्षिणोः ॥७२॥**
**मण्डूकी मण्डूकपर्ण्यां मण्डूको भेकशोणकौ ।**
**मल्लिको हंसभेदे स्यात् मल्लिका कुसुमान्तरे ॥७३॥**

पञ्चस्वर्थेषु । कटफलौषधं श्रीपर्णी ॥७०॥ यवानी दुष्टो यवः । घनसार कर्पूरः । भूनिम्बः किराततिक्तः । भूस्तृणं छत्रा । भूमिका तु रचनायां रूपान्तरपरिग्रहे । भूमिरेव भूमिका । रचनायां यथा– आद्या प्रासादभूमिका । रूपान्तरपरिग्रहे यथा–अथोपपत्तिं छलनापरोपरामवाप्य शैलूष इवष भूमिकाम् । ॥७१॥ मशकः क्षुद्ररुग्जन्तुभेदयोः । मशति मशकः । "दृ कृ नृ" (उ० २७) इति अकः । जन्तुभेदे यथा–यामिन्यां यामि स्वपिमि ननु निर्दंशमशके । मधुकं त्रपु मधुयष्टिश्च मचते मधुकम् । "कञ्चुकांशुक" (उ० ५७) इति साधुः । त्रपु वङ्गम् । मधुयष्टिर्मधुकाष्ठम् । तत्र स्त्रीक्लीबः । मधुको बन्दि-श्रीवदपक्षिणोः । बन्दी बन्दिभेदः । यच्छाश्वतः मधुका बन्दिनः केऽपि । श्रीवदाख्यः पक्षी श्रीवदपक्षी ॥७२॥ मण्डूकी मण्डूक-पर्ण्यां । मण्डति मण्ड्यते वा मण्डूकी । "मृमन्यञ्जि" (उ० ५८) इति उकः । गौरादित्वाद् ङीः । मण्डूकपर्णी ओषधिः । मण्डूको भेकशोणकौ । भेके यथा–तावद्गर्जसि मण्डूकः कूपमाश्रित्य निर्भयः । शोणको नदभेदः । मल्लिको हंसभेदे स्यात् । मल्लति मल्लिकः । "कीकल्यलि" (उ० ३८) इति बहुवचनादिकः ।

मधुका बन्दिनः कोऽपि । मण्डुकी०



**मीने मृत्पात्रभेदे च मातृका करणेश्वरे ॥**
**मातृवर्णसमाम्नायोपमातृष्वथ मालिका ॥७४॥**
**पक्षिमल्ले सरिद्भेदे ग्रैवेये पुष्पदामनि ॥**
***मेचकः श्यामले कृष्णे तिमिरेबर्हिचन्द्रके ॥७५॥**

हंसभेदो मलिनचञ्चुचरणः । मल्लिका कुसुमान्तरे मीने मृत्पात्रभेदे च । कुसुमान्तरं विचकिलम् । तत्र यथा–उपयगौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसम्पदः ॥७३॥ मीनो मीनभेदः । मृत्पात्रभेदः शरावः । तत्र यथा–मल्लिका-कितकरा विविशुस्ताः । वाद्यभेदेऽपि मङ्गः–यथा–मल्लिका झल्लरीध्वनिः । मातृका करणेश्वरे । मातृवर्णसमाम्नायोपमातृषु । मातृप्रतिकृतिर्मातृका मातैव वा । करणानि इन्द्रियाणि तेषामी-श्वरः, आत्मकरणेश्वरः । तत्र यथा–दुर्ज्ञानं मातृकातत्वम् । शेषेषु यथा-विश्वंमातृकया विश्वं ज्ञापितं सकलाः कलाः। अथ मालिका ॥ पक्षिमल्ले सरिद्भेदे ग्रैवेये पुष्पदामनि । मलते मालिका मालैव वा ॥७४॥ पक्षिमल्लः पक्षिविशेषः । सरिद्भेदो नदीविशेषः । ग्रैवेयं ग्रीवाभरणम् । तत्र यथा–कण्ठस्थितया विमलप्रश्नोत्तर-रत्नमालिकया । पुष्पदामनि यथा–मौलिश्चम्पकमालिकाव-लयितः । मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके । मच्यते मेचकः । "कीचकपेचक" (उणादि ३३) इति साधुः श्यामल-कृष्णयोर्वर्णविशेषयोः पुंक्लीबः । तद्वति वाच्यलिङ्गः । श्यामलं नीलम् । कृष्णम् असितम् । तयोर्यथा–गजकदम्बकमेचकमुच्चै-(मुचकै)र्नभसि वीक्ष्य नवाम्बुदमम्बरम् । तिमिरे बर्हि-चन्द्रके च यथा–जलदमेचककञ्चुकिता दिशोः भृशमवेक्ष्य विनृत्यति

* मामलं तु मदीये स्यान्मामाको मातुले स्मृतः । मेचकः० ।

**मोचको मोक्तृकदलीशिग्रुद्रुमविरागिषु ।।**
**मोदको हर्षुलो खाद्ये यमको यमजे व्रते ।।७६।।**
**यमकं वागलङ्कारे याजको राजकुञ्जरे ।**
**याज्ञिके च युतकं तु यौतके युग्मयुक्तयोः ।।७७।।**

मेचकी ।।७५।। मोचको मोक्तृकदलीशिग्रुद्रुमविरागिषु । मुञ्चति मोचकः । चतुर्षु अर्थेषु । विरागी मुमुक्षुः । तत्र मोक्तरि च वाच्यलिङ्गः । मोक्तरि यथा– व्रीडसङ्कोचमोचकः । शेषेषु यथा– मोचकैरञ्चितं वनम् । मोदको हर्षुले खाद्ये । मोदतेऽसौ मोदयति वा मोदकः । हर्षुलो हर्षवान् । हर्षहेतुर्वा । तत्र वाच्यलिङ्गः । खाद्ये लड्डुके पुंक्लीबः । द्वयोर्यथा–मुदिता मोदकमुदितं रवीन्दुकवलैकगृध्नुमतिभीमम् । यमको यमजे व्रते । यम एव यमकः । यमजो युग्मजातः । तत्र वाच्यलिङ्गः । द्वयोर्यथा–नकुलः सहदेवश्च यमको यमकस्थितौ ।।७६।। यमकं वागलङ्कारे । यमौ समजातौ तत्प्रतिकृतिर्यमकम् । वागलङ्कारे । शब्दालङ्कृतौ । यथा–अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः । यमकं पादतद्भागवृत्तितद्यात्यनेकताम् । याजको राजकुञ्जरे । याज्ञिके च । यजति याजयति वा याजकः । राजकुञ्जरो भूपश्रेष्ठः । याज्ञिको यज्ञक्रियाज्ञाता । द्वयोर्यथा–याजकः पूज्यते न कैः । युतकं तु यौतके युग्मयुक्तयोः । संशये चलनाग्रे स्त्रीवस्त्रभेदे पटाञ्चले । युतौ कायति युतमेव वा युतकम् । युक्ते वाच्यलिङ्गः । यौतकं युतयोर्वधूवरयोर्देयम् । तत्र युग्मे युक्ते च यथा–हस्त्यश्वरत्नयुतकं युतकाय(युग्माय) देयम् । चलनश्चण्डातकः तस्याग्रं चलनाग्रम् । स्त्रीवस्त्रभेदः । परिधानान्तरपटः । रजकौ धावकशुकौ । रजति रजकः ।



**संशये चेलनाग्रे स्त्री वस्त्रभेदे पटाञ्चले ।**
**रजकौ धावकशुकौ रसिकाकटिसूत्रके ।।७८।।**
**रसनायां रसालायां रात्रकं पंचरात्रके ।**
**रात्रकस्तु पणवधूगृहान्तर्वर्षवासिनि ।।७९।।**

"नृतूवनञ्जः शिल्पिन्यकट्" । धावको निर्णेजकः । तत्र यथा–रजकशिलातलसदृशं यासां जघनं च वदनं च । शुकः शुकविशेषः । रसिका कटिसूत्रके । रसनायां रसालायां । रसयति रसिका रसोऽस्त्यस्यां वा । कटिसूत्रम् मेखला ।।७८।। रसना जिह्वा । रसाला शिखरिणी । रात्रकं पञ्चरात्रके । पञ्चानां रात्रीणां समाहारः पञ्चरात्रकम् । "संख्यातैक" ७–३–११९ । इति अत् समासान्तः । पञ्चरात्रमेव पञ्चरात्रकम्* । स्वार्थेकः । पञ्चरात्रैकदेशो रात्रकं भामावत् । रात्रकस्तु पणवधूगृहान्तर्वर्षवासिनि । रात्रीराचक्षाणौ रात्रकः । णिजन्ताण्णकः ।।७९।। राजिका पङ्क्तौ रेखायां केदारे राजसर्षपे । राजिरेव राजिका । राजते वा । पङ्क्तौ यथा–परिरराज मतङ्गजराजिका । रेखायां यथा–अराजके भूर्जदले लिलेख । केदारो वप्रः । राजसर्षपे यथा–जुहोति वह्नौ लवणं सराजिकम् । रुचकं तु मातुलिङ्गे निष्के सौवर्चलेऽपि च । रोचते रुचकम् । "ध्रुधून्दि" (उ०२९) इति किदकः । निष्के मातुलिङ्गे च पुंक्लीबः । मातुलिङ्गे यथा पीतवत्यभिमते मधुतुल्यस्वादमोष्टरुचकं चिदिदङ्क्षौ । निष्के ×वक्षोविभूषणे यथा–स्वस्तिकादिसमाकारं रुचकं रुचिमद्विदुः । ललामन्यपि मंखः । ललामरत्नं तत्र यथा–अधररुचकं चन्दन-

* तत्प्रतिपादकोग्रन्थोऽपि पञ्चरात्रकम् ।
× यद्यपि लिङ्गविदो भूषाग्रैवेयकं व्याख्यान्ति तथापि अनेकार्थकृत उरोविभूषणमपि ग्रैवेयकमामनन्तीति कृत्वा निष्केऽपि पुंक्लीबत्वम् ।

**राजिका पङ्क्तौ रेखायां केदारे राजसर्षपे ।**
**रुचकं तु मातुलिङ्गे निष्के सौवर्चलेऽपि च ॥८०॥**
***रूपकं नाटकाद्येषु काव्यालङ्कारधूर्त्तयोः ।**
**रेणुका तु हरेण्वां स्याज्जमदग्नेश्च योषिति ॥८१॥**

पेषणपाषाणेऽपि ॥८०॥ रूपकं नाटकाद्येषु काव्यालङ्कारधूर्त्तयोः । रूप्यते रूपकम् । "कीचक" (उणादि ३३) इति साधुः । रूपयति वा । नाटकाद्येषु यथा–सत्यार्था भारती यस्य दशरूपकसंश्रया । काव्यालङ्कारे यथा–तद्रूपकमभेदो य उपमानोपमेययोः । धूर्त्ते शठे वाच्यलिङ्गः । सुवर्णादिमुद्रायामपि । यथा–तदपि साम्प्रतमाहररूपकम् । रेणुका तु हरेण्वां स्याज्जमदग्नेश्च योषिति॥ रेणुप्रतिकृतिः रेणुका, रणति वा ॥ "कञ्चुक" (उ०५७) इति साधुः । हरेणुर्गन्धद्रव्यम् । जमदग्नियोषिति यथा–अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥८१॥ लम्पाको लम्पटे देशे । लपति लप्यते वा लम्पाकः । "मवाक श्यामाक" इति साधुः । लम्पटे वाच्यलिङ्गः । तत्र यथा–लम्पाकः पाकशासनः । देशे यथा–लम्पाकीनां किरन्तश्चि कुरविरचनाम् । लासकौ केकिनर्त्तकौ । लसति लासकः । नर्त्तके वाच्यलिङ्गः । द्वयोर्यथा–पयोदमुरजध्वनौ लसति ध्लासको नृत्यति । लूनकस्तु पशौ भिन्ने । लून एव लूनकः । "लूनवियावात्पशौ" (७–३–२१) इत्यनेन यावादित्वाद् वा कः भिन्ने वाच्यलिङ्गः । लोचको नीलवाससि । कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे । निर्बुद्धौ कर्णिकामोचाज्यासुभ्रूश्लथचर्म्मणि ॥ लोच्यते लोचयति

* मु० रोचनायां विडङ्गे च मङ्गलद्रव्यदन्तयोः ।
अवश्याभरणे लाल्ये प्रोत्कटेऽपि प्रकीर्तितः ॥



**लम्पाको लम्पटे देशे लासकौ केकिनर्तकौ ।**
**लूनकस्तु पशौ भिन्ने लोचको नीलवाससि ॥८२॥**
**कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे ।**
**निर्बुद्धौ कर्णिकामोचाज्यासुभ्रूश्लथचर्मणि ॥८३॥**
**वराकः शोच्यरणयोः वर्तकोऽश्वखुरे खगे ।**
**वञ्चको जम्बुके गेहनकुले खलधूर्तयोः ॥८४॥**

वा लोचकः । दशस्वर्थेषु । निर्बुद्धौ वाच्यलिङ्गः । नीलवाससि गोपीनां चतुर्हस्तप्रमाणनीलवस्त्रे यथा पुष्पेक्षणैर्लम्बितलोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥८२॥ शेषेषु यथा–लोचकः कस्य रोचकः ॥८३॥ वराकः शोच्यरणयोः । वृणीते वराकः । "वृद्भिक्षि" ५–२–७० इति टाकः । वरैरक्यतेऽत्रेति वा । शोच्ये वाच्यलिङ्गः । तत्र यथा–भ्रमति विरहखिन्नश्चक्रवाको वराकः । रणः सङ्ग्रामः । वर्त्तकोऽश्वखुरे खगे । वर्त्तते वर्त्तकः । अश्वखुरे यथा–वर्त्तकक्षुण्णभूगर्त्तः । खगे खगविशेषे यथा–तदन्धकवर्त्तकीयं काकतालीयं यन्मूर्खमिन्त्रेषु क्वचित्कार्यसिद्धिः। अत्र हि अन्धकश्च वर्त्तकश्च अन्धकवर्त्तकं तत्तुल्यमन्धकवर्त्तकीयम् । वञ्चको जम्बुके गेहनकुले खलधूर्त्तयोः । वञ्चयति वञ्चकः । खलधूर्तयोर्वाच्यलिङ्गः । चतुर्ष्वर्थेष्वपि यथा–वञ्चकैरावृतात्तास्ते दुर्गमा वनभूमृतः । वल्मीको नाकुवाल्मीक्योः रोगभेदे । वलने वल्मीकः । "सृणीकास्तीक" (उ० ५०) इति साधुः । नाकौ वामलूरे पुंक्लीबः । तत्र यथा–वल्मीकाग्रात्प्रभवति धनुः खण्डमाखण्डलस्य । वल्मीकौ प्राचेतसे यथा-पीयूषमिव नालीकं वल्मीकस्य कवेर्वचः(गिरः) । रोगभेदे रोगविशेषे यथा–असाध्यः पादवल्मीकः । अथ वर्णकः । विलेपने मलयजे नटे च (वारणे च) वर्णयति वर्णकः ॥८४॥ विलेपने मलयजे च पुंक्लीबः । विलेपने

**वल्मीको नाकुवाल्मीक्यो रोगभेदेऽथ वर्णकः ।**
**विलेपने मलयजे नटे च वसुकं पुनः ।।८५।।**
**रौमके वसुकस्तु स्याच्छिवमल्ल्यर्कपर्णयोः ।**
**व्यलीकं व्यङ्ग्य वैलक्ष्याप्रियाकार्येषु पीडने ।।८६।।**

यथा—अपि रहसिकृतानां वाग्विहीनोऽपि जातः सुरतविलसितानां वर्णको वर्णकोऽसौ । मलयजे यथा—अङ्गंदधिवर्णकलेपशुभ्रम् । (वारण) नटे यथा—वर्णकैर्वर्णितः कर्णः स्वर्णं पूर्णं द्विपं ददौ । वसुकं पुनः ।। रौमके । वस्यते वसति वा वसुकम् । "कञ्चुकांशुक" (उ०५७) इति साधुः ।।८५।। रौमकम् रुमाभवं लवणम् । वसुकस्तु स्याच्छिवमल्ल्यर्कपर्णयोः । शिवमल्ली बकपुष्पम् । अर्कपर्णोऽर्कवृक्षः । व्यलीकं व्यङ्ग्यवैलक्ष्याप्रियाकार्येषु पीडने । विशिष्टम् अलीकं यत्र व्यलीकम् । विशेषेण अल्यते वा । "स्यमिकषि" (उ० ४६) इति ईकः। अप्रियेऽकार्ये च पुंक्लीबः। व्यङ्ग्यं ध्वन्यम्, वैलक्ष्ये यथा—न किञ्चिदूचे स किल व्यलीकात्। अप्रिये यथा-मया न तेऽकारि मनाग्व्यलीकम् । अकार्ये यथा—सुजनोऽपि चकार स व्यलीकम् । पीडने यथा—चिरव्यलीकेन जगाम शान्तिम् । कामजदोषविपर्ययोरपि मङ्खः । कामजदोषे यथा—सेहे न गोत्रस्खलितं व्यलीकम् । विपर्यये यथा—पृष्टोऽपि सत्यं वदति व्यलीकम् ।।८६।। वार्षिकं त्रायमाणायां वर्षाभवे । वर्षासु भवं वार्षिकम् । "वर्षाकालेभ्यः" ६—३—८० इति इकण् । त्रायमाणा ओषधिः । वर्षाभवे वाच्यलिङ्गः । तत्र यथा—वार्षिकं संजहारेन्द्रो धनुर्जैत्ररघुर्ददौ । अथ वाल्हिकः। देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गु कुङ्कुमम् वाल्हिकवत् । वल्हते वाल्हिः । "पदिपठि (उ०६०७) इति इः । बाहुलकात् दीर्घः स्वार्थे के वाल्ही(ल्हि)-कः । "सृणीकास्तीक" (उ० ५०) इति ईके वाल्हीकः ।



**वार्षिकं त्रायमाणायां वर्षाभवेऽथ वाल्हिकः ।**
**देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गु कुङ्कुमम् ।।८७।।**
**वाल्हिकवद्वार्धकं तु वृद्धत्वे वृद्धकर्मणि ।**
**वृद्धानां समवाये च वालुकं हरिवालुके ।।८८।।**

देशभेदाश्वभेदयोः पुंल्लिगौ । हिङ्गुकुङ्कुमयोर्नपुंसकौ । देशभेदाश्श्वभेदे च यथा—वाल्हिकेशो निगल्हते । वाल्होकीदशनच्छ्दारुणतलैः पत्रैरशोकोऽर्च्चितः वाल्हीकं तुरगं नृपः हिङ्गुकुङ्कुमयोर्यथा-गान्धिका वाल्हिकक्षोदामोदमोदितदिग्मुखाः ।।८७।। वाल्हीकार्द्रसैन्धवैः। सुरभिता वाल्हीकचन्दनविलेपित वाणलिङ्गः। वार्द्धकं तु वृद्धत्वे वृद्धकर्मणि । वृद्धानां समवांये च । वृद्धस्य भावः कर्म वा वार्द्धकम् । चोरादित्वादकञ् । वृद्धानां समूहो वा । "गोत्रोक्षव. त्सोऽकञ् ६—२—१२ इति अकम् । वृद्धत्वे यथा—वार्द्धके मुनिवृत्तीनाम् । वृद्धकर्मणि यथा—वार्द्धकं हास्यवर्द्धकम् । वृद्धसमवाये यथा—वार्द्धकं सेवमानस्य पुंसो बुद्धिर्विवर्द्धते । वालुकं हरिवालुके । वलते वालुकम् । "कञ्चुक" (उ० ५७) इति साधुः । हरिवालुकं भेषजभेदः ।।८८।। वालुका तु सिकतासु । यथा—क्रीडन्त्येता विपुलपुलिने बालिका वालुकाभिः । वितर्कः संशयोहयोः । वितर्कणं वितर्कः । स्थाणुर्वा पुरुषो वेति संशयः तत्र यथा—समालोक्याजौ त्वां विदधति वितर्कान् प्रतिभटाः । ऊह उन्नयनम् । तत्र यथा—त्वय्यायाते वितर्कानि निदधत्त इवाभाति कम्पः पयोधेः । विपाकः परिणामे स्याद्दुर्गतिस्वादुनोरपि । विपचनं विपच्यतेऽस्मिन् वा विपाकः । स्वादुनि गुणे पुंसि । तद्वति वाच्यलिङ्गः । परिणामे यथा—हतविधिललितानां हा विचित्रो विपाकः । दुर्गतौ यथा—ते विपाके विपच्यन्ते दुस्सहे दुःखकोटिभिः । स्वादुनि यथा—त्वद्वचः पक्वमाकन्दविपाकं नाकनायिके । पचन-

वालुका तु सिकतासु वितर्कसंशयोर्हयोः ।
विपाकः परिणामे स्याद्दुर्गतिस्वादुनोरपि ॥८९॥
विवेकः पुनरेकान्ते जलद्रोणीविचारयोः ।
वृषाङ्कः साधुभल्लात शंकरेषु महल्लके ॥९०॥
वृश्चिकस्तु द्रुणे राशावौषधिशूककीटके ।
वैजिकं कारणे शिग्रुतैले च वैजिकोऽङ्कुरे ॥९१॥

---

स्वेदयोरपि मङ्खः । पचने यथा—विपाके कटुशीतश्च । स्वेदे यथा—आमज्वरे विपाकं प्रयुञ्जीत ॥८९॥ विवेकः पुनरेकान्ते जलद्रोणीविचारयोः। विविच्यते विवेचनं वा विवेकः । पृथगात्मतायामपि । तत्रैकान्ते विचारे च यथा—रतिर्विवेके हि सदैव योगिनः । जलद्रोणी अवगाहस्थानम् । वृषाङ्कः साधु भल्लातशंकरेषु (वृषाङ्कौ शिवभल्लातौ रभसः) महल्लके। वृषो धर्म्मो महोक्षो वाङ्को यस्य वृषाङ्कः । वृश्चयते वर्षति वा । "मवाक" (उ० ३७) इति साधुः । साधौ सदाचारे वाच्यलिङ्गः । भल्लातो वृक्षविशेषः । शङ्करे यथा—पायाद्देवो वृषाङ्कः । महल्लकः सौक्दिल्लः ॥९०॥ वृश्चिकस्तु द्रुणे राशावौषधिशूककीटके । वृश्चति वृश्चिकः। "पापुलि" (उ० ४१) इति किदिकः । द्रुणे स्त्रीपुंसः । द्रुणे राशिभेदे च-यथा—तुलामारुह्य सूर्येण वृश्चिके निहितं पदम् । औषधे मदनकाख्ये यथा—एता वृश्चिकरागरक्तचरणाः । शूकप्रधानः कीटः कण्टकी कृमिः शूककीटः । तत्र यथा—गर्द्दभकवृश्चिकाकुलपङ्किलवसुधातलासु वर्षासु । वैजिकं कारणे शिग्रुतैले च । वीजं प्रयोजनमस्य वजिकम् । कारणं हेतुः। शिग्रुः शोभाञ्जनस्तस्य तैलम्, शिग्रुतैलम् । वैजिकोऽङ्कुरे । अङ्कुरः प्ररोहः ॥९१॥ शङ्खकं वलये कम्बौ । शङ्ख एव शङ्खकम् । द्वयोर्यथा—सुमुख्यो मङ्गलं चक्रुः शङ्खकाङ्कित-



शङ्खकं वलये कम्बौ शङ्खकस्तु शिरोरुजि ।
शम्पाकस्तु वियाते स्याद्याचके चतुरङ्गुले ॥९२॥
शम्बूको दैत्यविशेषे करिकुम्भान्तशङ्खयोः ।
शलाका शारिका शल्यं श्वाविदालेरव्यकूर्चिका ॥९३॥

---

पाणयः । शङ्खकस्तु शिरोरुजि । शङ्खं भालैकदेशं कृणोति शङ्खकः। "क्वचित्" इति डः । शम्पा(या)कस्तु वियाते (विपाके) स्याद्याचके चतुरङ्गुले । शाम्यति शम्याकः । "मवाक श्यामाक" (उ० ३७) इति साधुः । वियातो धृष्टः । याचको मार्गणः । तयोर्वाच्यलिङ्गः । चतुरङ्गुलः कृतमालतरुः ॥९२॥ शबूको दैत्यविशेषे करिकुम्भान्तशङ्खयोः । शाम्यति शम्बूकः । "शम्बूक शाम्बूक" (उ० ६१) इति साधुः । दैत्यविशेषे यथा—ब्रूत ब्रूत भटाः क्व स क्व स नरः शम्बूकजीवाहरः । करि-कुम्भान्तो हस्तिकुम्भपर्यन्तः । शङ्खः कम्बुः । शलाका शारिका शल्यं श्वाविदालेख्यकूर्चिका छत्रपञ्जरकाष्टीषु । शलति शलाका । "शलिवलि" (उ० ३४) इत्याकः । षट्ष्वर्थेषु । शारिका पक्षिविशेषः । शल्यम् आयुधविशेषः श्वाविन् मृगविशेषः । आलेख्य-कूर्चिका चित्रकरलेखनी । छत्रपञ्जरयोः काष्ठीछत्रपञ्जर काष्ठी इषुर्वाणविशेषः शारिकायां पञ्जरकाष्ठयां च यथा—शलाकापञ्जरस्थेयं शलाकामञ्जु गुञ्जति । आलेख्यकूर्चिकायां यथा—तस्याशलाकाञ्जननिर्मितेव ॥९३॥ छत्रकाष्टयां-यथा—छत्रं रत्नशलाकाभिर्मेघनीलं विराजते । इषौ यथा—क्षितिपालः शलाकाभिः संकीलयति शात्रवम् । रत्नस्वरूपभित् परीक्षयोरपि मंखः । क्रमेण यथा—वडूर्यभूमिर्नवभेघशब्दादुद्भिन्नया रत्नशलाकयेव । शलाकया कोऽपि भिनत्ति पत्रम् । शल्लकी

**छत्रपञ्जरकाष्टीषु शल्लकी श्वाविधिद्द्रुमे ।**
**शार्ककः स्याद्दुग्धफेने शर्करायाश्च पिण्डके ॥९४॥**

**शिशुकः पादपे बाले शिशुमारेऽथ शीतकः ।**
**शीतकालेऽलसे सुस्थे शूशकः प्रावटे रसे ॥९५॥**

**स्वस्तिको मङ्गलद्रव्ये गृहभेदचतुष्कयोः ।**
**स्यमीकः पादपे नाकौ स्यात्स्यमीका तु नीलिका ॥९६॥**

-श्वाविधिद्रुमे । शलश्चल्ल आशुगतौ । कीचकादित्वात् शल्लकी । द्रुमे यथा-रेवाजलं किसलयानि च शल्लकीनाम् । अयं दन्त्यादिरपि । शार्ककः स्याद्दुग्धफेने शर्करायाश्च पिण्डके । शृणाति पित्तमिति शार्ककः । "कीचक" (उ० ३३) इति साधुः ॥९४॥ शिशुकः पादपे बाले शिशुमारे । शिशुरेब शिशुकः। शिशुं कृन्तति वा "क्वचित्" इति डः । बाले यथा—विविशुः शिशुकाः क्रोडे । अथ शीतकः शीतकालेऽलसे सुस्थे । शीत एव शीतकः । शीतं करोति वा । "शीताच्च कारिणि" इतिकः । अलससुस्थयोर्वाच्यलिङ्गः सर्वेषु यथा—शीतको दुर्गद्वेष्यः। शूककः प्रावटे रसे । शुक्गतौ शूककः । कीचकादित्वात् अके साधुः । प्रवृद्धो वटः कूपः प्रावटः । रसः पारदः ॥९५॥ स्वस्तिको मङ्गलद्रव्ये गृहभेदचतुष्कयोः । स्वस्तिकायति करोति वा स्वस्तिकः । 'क्वचित्" इति डः । मङ्गलद्रव्ये यथा—मुक्तास्वस्तिकमातनुध्वमुडुपत्वं पूर्णकुम्भी भव । गृहभेदो गृहविशेषः । तत्र यथा—स्वस्तिकः सर्वतोभद्रोरुचको वर्द्धमानकः । नन्द्यावर्त्तादयश्चान्ये द्वारालिंदादिभेदतः । चतुष्कं चतुष्पथम् । स्यमीकः पादपे नाकौ स्यात् । स्यमू शब्दे । स्यम्यते स्यमीकः । "स्यमिकषि" (उ० ४६) इतिईकः । नाकुर्वल्मीकः । स्यमीका तु नीलिका ॥ नीलिका ओषधिभेदः ।



**सरको मदिरापात्रे मदिरापानमद्ययोः ।**
**सस्यको नालिकेरान्तः सस्याभमणिखङ्गयोः ॥९७॥**

**सम्पर्कः सुरते पृक्तौ सायको बाणखङ्गयोः ।**
**स्थासको हस्तबिम्बे स्यात्स्फुरकादेश्च बुद्बुदे ॥९८॥**

॥९६॥ सरको मदिरापात्रे मदिरापानमद्ययोः । सरति सरकः । "दृकृनृ" (उ०२७) इति अकः । मदिरापाने त्रिलिङ्गः, शेषयोः पुंक्लीबः । मद्यं मद्यविशेष इक्षुशीधु । सर्वेषु यथा—प्रापिचेतसिसविप्रतिसारे योषितामवसरः सरकेण । सस्यको नालिकेरान्तः सस्याभमणिखड्गयोः । सस्यप्रतिकृतिः सस्यकः । "तस्य तुल्ये" ७/१/१०८ समन्तात्स्यति वा "कीचक" (उ०३३) इति साधुः । सस्येन परिजातो वा । "सस्याद्गुणात्परिजाते" ७/१/१७८ इति कः । नालिकेरस्य अन्तः सस्यं मध्यं बीजं तत्सदृशो मणिः । कश्चित्तु सस्यकः स्यान्मणौ खड्गे नालिकेरस्य चान्ते इत्याह । सम्पर्कः सुरते पृक्तौ । सम्पर्चनं सम्पर्कः । सुरते यथा—सम्पर्कस्तर्क्यते यूनोः श्लथधम्मिल्लभूषणैः । पृक्तौ सम्बन्धे यथा—प्राप्यतां विद्युतः सम्पत्सम्पर्कादर्करोचिषाम् । सायको बाणखड्गयोः । स्यति सायकः । णकः । बाणे यथा—युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः । खड्गे यथा—सायकसहायवाहोर्मकरध्वजनियमितक्षमाधिपतेः । स्थासको हस्तबिम्बे स्यात्स्फुरकादेश्च बुद्बुदे तिष्ठति स्थासकः । "कीचक" (उ० ३३) इतिसाधुः । हस्तबिम्बे यथा—सीताहस्ताम्बुजन्मार्पित—मलयभवस्थासकानर्च्चनेषु । स्फुरकादीनां बुद्बुदाकारे पित्तलादिमये भूषणे यथा—रौक्मा रेजुः (सौवर्णाः) स्थासका मूर्त्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषः ॥९८॥ सूतकं जन्मनि रसे । सूत शब्दात्स्वार्थे-

**सूतकं जन्मनि रसे सूचकः शुनि दुर्जने ।**
**कथके सीवनद्रव्ये मार्जारे वायसेऽपि च ॥९९॥**

**सृदाकुर्वज्रे दावाग्नौ प्रतिसूर्ये समीरणे ।**
**सेवकोऽनुगे प्रसेवे सेचकः सेक्तृमेघयोः ॥१००॥**

**हारको गद्यविज्ञानभिदोः कितवचोरयोः ।**
**हुडुक्को मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि ॥१०१॥**

के सूतकम् । रसे पारदे पुंक्लीवः । जन्मनि यथा—न ग्राह्यं सुतसूतके । रसे यथा—कुष्ठिने भस्मसूतकम् । सूचकः शुनि दुर्जने । कथके सीवनद्रव्ये मार्जारे वायसेऽपि च सूचयति सूचकः । कथकदुर्जनयोर्वाच्यलिङ्गः । शुनि दुर्जने मार्जारे वायसे च यथा—सूचको नीचवृत्तिः । कथके यथा—क्षुतं न शुभसूचकम् । सीवन-द्रव्ये यथा—सूचकैः सीव्यते गोणी ॥९९॥ सृदाकुर्वज्रे दावाग्नौ प्रतिसूर्ये समीरणे । सरति सृदाकुः । "सृपृभ्यांदाकुक्" (उ० ७५६) चतुर्ष्वु अर्थेषु पुंसि । प्रतिसूर्यः कृकलासः । सेवकोऽनुगे प्रसेवे। सेवते सेवकः । सीव्यते वा । "नाम्नि पुंसि च" इति णकः । अनुगे वाच्यलिङ्गः । तत्र यथा—प्रणमत्युन्नति हेतोर्जीवितहेतो-र्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्यः । प्रसेवो वस्त्राद्यावपनम्, तत्र यथा-वीणापि सेवकवियोगवशाद्विषीदेत् । सेचकः सेक्तृमेघयोः । सिञ्चति सेचकः । सेक्तरि वाच्यलिङ्गः । द्वयोर्यथा—वनं सिञ्चति सेचकः ॥१००॥ हारको गद्यविज्ञानभिदोः कितवचौरयोः । हरति चित्तं वित्तं वा हारकः । चतुर्ष्वर्थेषु । गद्यं छन्दोरहितो वाक्यबन्धस्तस्यभिद्विशेषः विज्ञानभित् कला-विशेषः । कितवो धूर्त्तः । चौरस्तस्करः । हुडुक्को मदमत्ते स्याद्दा-त्यूहे वाद्यभिद्यपि । हुडृगतौ होडति हुडुक्कः । "निष्कतुरुष्क"



**हेरुकस्तु महाकालगणबुद्धविशेषयोः ।**
**गोमुखं वाद्यभाण्डे स्याल्लेपने कुटिलौकसि ॥१०२॥**

**त्रिशिखो रक्षः त्रिशिखं स्यात्किरीटत्रिशूलयोः ।**
**दुर्मुखो मुखरे नागराजे वाजिनि वानरे ॥१०३॥**

**प्रमुखं प्रथमे मुख्ये मयूखा जालरुक् त्विषः ।**
**विशिखा खनित्रिकायां रथ्यायां विशिखः शरे ॥१०४॥**

(उ० २६) इति साधुः । वाद्यभिदि स्त्री पुंसलिङ्गः । मुत्त-हिक्का हुडुक्का ॥१०१॥ हेरुकस्तु महाकालगणबुद्धविशेषयोः । हिनाति हेरुकः । "कञ्चुकः" (उ० ५७) इति साधुः । महा-कालस्य ईश्वरस्य गणः प्रमथस्तस्य बुद्धस्य च विशेषे । अथ खान्ताः । गोमुखं वाद्यभाण्डे स्याल्लेपने कुटिलौकसि । गोरिवमुख-मस्य गौर्जलं मुखं प्रधानमस्येति वा । गोमुखं वाद्यभाण्डे यथा—प्रहतानेकगोमुखे । लेपने यथा—यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि । कुटिलं गोमुखाकारम् । ओको गृहम् । तत्र यथा—गोमुखं श्रीपराङ्मुखम् । वैजयन्ती तु गोमुखोऽस्त्री वाद्यभेदे नक्रे नालेपने न पुमित्याह ॥१०२॥ त्रिशिखो रक्षः । तिस्रः शिखा यस्य त्रिशिखः । रक्षसि पलादे यथा—त्रिशिखो विशिखैर्हतः । त्रिशिखं किरीटत्रिशूलयोः । द्वयोर्यथा—उच्छिखं त्रिशिखं यस्य मौलौ पाणौ च वलगति । दुर्मुखो मुखरे नागराजे वाजिनि वानरे । दुष्टं मुखं यस्य दुर्मुखः । मुखरे वाच्यलिङ्गः । तत्र यथा—उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् । वाजिनि यथा—हर्तुं वक्त्रं नाशकद्दु-र्मुखोऽपि ॥१०३॥ प्रमुखं प्रथमे मुख्ये । प्रगतं मुखम् आदि-भावं प्रधानत्वं वा प्रमुखम् । वाच्यलिङ्गः । द्वयोर्यथा—वासव-

**विशाखो याचके स्कन्दे विशाखा भे कटिल्लके ।**
**वैशाखः खजके राधे सुमुखो गरुडात्मजे ॥१०५॥**

प्रमुखा देवाः । मयूखा ज्वालरुक्त्विषः । मयते मयूखः । मयेधिभ्यामुखे खौ (उ० ९१) इति ऊखः ज्वालोऽग्नेरर्चिः । रुक् शोभा त्विट् किरणः । ज्वाले ज्वालायां यथा—अभ्युद्गता अग्निभिरुन्मयूखैः । रुचि यथा—मुखमयूखपरजितमम्बुजम् त्विषि यथा—विततपृथुवरत्रातुल्यरूपैर्मयूखैः । विशिखा खनित्रिकायां रथ्यायां । विशेषेण श्यति विशिखा । "श्यतेरिच्च वा" (उ०८५) इति खः । विशिष्टा शिखाऽत्रेति वा । खनित्री मुनीनां मृदवदारणभाण्डं शस्त्रीप्रायम्, तत्र यथा—मुनयो विशिखोत्खातमृद्भिर्लिम्पति वेदिकाम् । रथ्या प्रतोली । यत्कौटिल्यः । विशिखायां सौवर्णिकप्रचारः । विशिखः शरे । शरे बाणे यथा—मनोभेद्यं शब्दप्रभृतय इमे पञ्चविशिखाः ॥१०४॥ विशाखो याचके स्कन्दे । विशखति विशाखः । याचकः प्रार्थयिता । तत्र वाच्यलिङ्गः । स्कन्दे यथा—दिश्याद्विशाखः शतशाखमायुः । विशाखा भे कटिल्लके । भे नक्षत्रे प्रायेण बहुवचनान्तः । तत्र यथा—कृत्तिकासु विशाखासु मघासु भरणीसु च । कटिल्लकः पुनर्नवः (कखेल्लकः) । यदाह—पुनर्नवो विशाखा च कटिल्लकः स शिलाटकः । वैशाखः खजके राधे । विशाखाः प्रयोजनमस्य वैशाखः । "विशाखाषाढान्मन्थदण्डे" इति अण् । वैशाखी पौर्णमासी अस्येति वा । "साऽस्य पौर्णमासी" इत्यण् । खजके मन्थानके यथा—दोर्वैशाखैर्विगाह्याम्भः । राधश्चित्रोत्तरो मासः । तत्र यथा—वैशाखे मधुसूदनः । स्थानकविशेषेऽपि मङ्क्वः । तत्र तु क्लीबे यथा—वैष्णवं समपादं च वैशाखं मण्डलं



**पण्डिते फणिभेदे स्यादयोगः कठिनोद्यमे ।**
**विश्लेषे विधूरे कूटेऽपाङ्गो नेत्रान्तपुण्ड्रयोः ॥१०६॥**
**अङ्गहीनेऽप्यनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे ।**
**आभोगः परिपूर्णत्वे वरुणच्छत्रयत्नयोः ॥१०७॥**

तथा । प्रत्यालीढमथालीढं स्थानान्येतानि षड् विदुः । सुमुखो गरुडात्मजे । पण्डिते फणिभेदे स्यात् । शोभनं मुखमस्य सुमुखः । गरुडात्मजो गरुडपुत्रः ॥१०५॥ पण्डिते वाच्यलिङ्गः । तत्र यथा—ग्राह्या सुमुखशेमुषी । फणिभेदो नागविशेषः । अथ गान्ताः । अयोगः कठिनोद्यमे । विश्लेषे विधूरे कूटे । नास्ति योगोऽत्र अयोगः । अयोवद्गति वा । चतुर्ष्वर्थेषु । कठिनेषु कर्मस्वद्यमोऽस्य पुरुषस्य कठिनोद्यमः । विधुरो विकलः । तयोर्वाच्यलिङ्गः । विश्लेषे यथा—वरगुरुभिरयोगे दृम्भते नो विवेकः । कूटमसत्यम् । अपाङ्गो नेत्रान्तपुण्ड्रयोः । अङ्गहीनेऽपि । अपक्रान्तोऽपगतो वा अङ्गात्, अपकृष्टमङ्गमस्येति वा अपाङ्गः । अङ्गहीने वाच्यलिङ्गः । नेत्रान्ते यथा—चलापाङ्गं दृष्टिं स्पृशसि बहुशो वेपथुमतीम् । पुण्ड्रे तिलके यथा—गोरोचनापाङ्गरुचौ ललाटे ॥१०६॥ अङ्गहीने यथा—कुर्यान्नापाङ्गसङ्गतिम् । अनङ्गं खे चित्ते । नास्ति अङ्गम् आकारः शरीरं वाऽस्य अनङ्गम् । खम् आकाशम् । चित्तं मनः । अनङ्गस्तु मन्मथे । यथा—अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः । आभोगः परिपूर्णत्वे वरुणच्छत्रयत्नयोः । आसमन्ताद् भुज्यतेऽनेन आभोगः । परिपूर्णत्वे यथा—दृश्यः किञ्चित्पवनचलचीनांशुकतया कुचाभोगः स्त्रीणां हरति न तथोन्मुद्रितवपुः । वरुणस्य पादः पतेश्छत्रं वरुणछत्रम् । यत्न आदरः ॥१०७॥ आयोगो गन्धमाल्योपहारे व्यापृतिरो-

**आयोगो गन्धमाल्योपहारे व्यापृतिरोधयोः ।**
**आशुगोऽर्के शरे वायौ उत्सर्गस्त्यागदानयोः ॥१०८॥**
**वर्जने सामान्यविधावुद्वेगं पूगिकाफले ।**
**उद्वेगस्तूद्वेजने *स्यात्कलिङ्गो नीवृदन्तरे ॥१०९॥**

धयोः । आयुज्यतेऽनेन आयुक्तिर्वा आयोगः । गन्धमाल्योपहारे यथा–आयोगयोगविहिताखिलदेवभोगः । व्यापृतौ व्यापारे यथा–आयोगो योगकर्मणि । रोधो निरोधनम् । आशुगोऽर्के शरे वायौ । आशु शीघ्रं गच्छति आशुगः । "नाम्नो गमः" इति डः । अर्के यथा–नाशयत्याशुगस्तमः । शरे यथा–रावणस्यापि रामास्तो (?) भित्वा हृदयमाशुगः । वायौ यथा–आशुगापहृत-पुष्पसौरभः । उत्सर्गस्त्यागदानयोः । वर्जने सामान्यविधौ । उत्सृज्यते उत्सर्जनम् वा उत्सर्गः । त्यागे यथा–तोयोत्सर्गा-द्रुततरगतिस्तत्परं वर्त्मतीर्णः । दाने यथा – वृत्तोत्सर्गः स्ववर्गेभ्यः स्वर्गद्वारमनर्गलम् ॥१०८॥ वर्जने यथा–कर्तव्यो मत्सरोत्सर्गः । सामान्येनोक्तोविधिः सामान्यविधिः । तत्र यथा–अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः । उद्वेगं पूगिकाफले । उद्गतो वेगोऽस्य स्रंसकत्वादुद्वेगम् । पुगिकाफलं क्रमुकम् । उद्वेगस्तूद्वेजने स्यात् । उद्वेजनम् उद्वेगः यथा–शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्याः । कलिङ्गो नीवृदन्तरे । पूतीकरञ्जे धूम्याटे स्यात् । कल्यते कलिङ्गः । "स्फुलीकलि पल्याद्भ्य इङ्गक्" (उ० १०२) कलिङ्गं चूडाऽस्येति वा । नीवृदन्तरे देशविशेषे यथा–उत्कलादेशितपथः कलिङ्गाभिमुखो ययौ । अयं प्रायेण पुंभूम्नि सूत्रे तु शब्दप्राधान्यादेकवचनान्तो निर्देशः ॥१०९॥

*मु० स्तिमिते शीघ्रगामिनि उद्वाहे च भवेऽपि स्यात्कलिङ्गो० ।



**पूतीकरञ्जे धूम्याटे स्यात्कलिङ्गा नितम्बिनी ।**
**कलिङ्गं कौटजे फले कालिङ्गस्तु भुजङ्गमे ॥११०॥**
**द्विरदे भूमिकर्कारौ कालिङ्गी राजकर्कटी ।**
**चक्राङ्गः श्वेतगरुति चक्राङ्गी कटुरोहिणी ॥१११॥**
**जिह्मगो मन्दगे सर्पे तुरगो वाजिचित्तयोः ।**
**तुरगी त्वश्वगन्धायां धाराङ्गस्तीर्थखड्गयोः ॥११२॥**

पूतीकरञ्जो वृक्षः । धूम्याटः पक्षी । कलिङ्गा नितम्बिनी । नितम्बिनी स्त्रीविशेषः । कलिङ्गं कौटजे फले । कुटजस्य वृक्षस्येदं फलं कौटजम् । कालिङ्गस्तु भूजङ्गमे । द्विरदेभूमि-कर्कारौ । कु ईषत् लिङ्गमस्य कालिङ्गः । "अल्पे" इति कादेशः, कलिङ्गे भवो वा । केन (जलेन) आलिङ्ग्यते वा ॥११०॥ भूमिकर्कारुः । कूष्माण्डविशेषः । कालिङ्गी राजकर्कटी । राजकर्कटी राजचिर्भटी । चक्राङ्गः श्वेतगरुति । चक्राकारं वृत्तत्वादङ्गमस्य चक्राङ्गः । श्वेतगरुति हंसे यथा–चक्राङ्गै-र्वक्रितग्रीवैः । चक्राङ्गी कटुरोहिणी । कटुरोहिणो ओषधि-विशेषः ॥१११॥ जिह्मगो मन्दगे सर्पे । जिह्मं गच्छति जिह्मगः । "नाम्नो गमः" इति डः । मन्दगे वाच्यलिङ्गः । द्वयोर्यथा–जिह्मगाः कस्य न द्वेष्याः । तुरगो वाजिचित्तयोः । तुरो गच्छति तुरगः । नाम्नोगमः इति डः । वाजिनि अश्वे यथा–आकुल्यकारि-कटकस्तुरगेण तूर्णम् । चित्तं मनः । तुरगी त्वश्वगन्धायाम् । अश्वगन्धा ओषधिः । धाराङ्गस्तीर्थखड्गयोः । धारां परं प्रकर्ष-मङ्गति धाराङ्गः । धारे वाङ्गमस्येत्ति वा । तीर्थं तीर्थविशेषः । खड्गे यथा–भ्रातर्भ्रंस्यति भूधरोऽपि भवता धारङ्गधाराहतः ॥११२॥ नरङ्गं शेफे वरण्डे । नृणाति नरंगम् । पतितमीत्यंगः ।

**नरङ्गं शेफे वरण्डे नारङ्गं विटजन्मिनोः ।**
**कणारसे नागरङ्गे निषङ्गस्तूर्णसङ्गयोः ॥११३॥**
**निसर्गः सृष्टौ स्वभावे *प्लवगः कपिभेकयोः ।**
**अर्कसूते पन्नगस्तु पद्मकोष्ठे भुजङ्गमे ॥११४॥**

शेफो लिङ्गम् । वरण्डो भित्तिः । इक्ष्वादिभारको वा । नारङ्गं विटजन्मिनोः । कणारसे नागरङ्गे । नृणाति नारङ्गम् । "सृवृनृभ्यो णित्" (उ० ९९) इति अंगः । चतुर्ष्वर्थेषु । विटः खिड्गः। जन्मी देही । कणारसः पिप्पलीरसः। नागरङ्गे यथा—रसो गन्धश्च रूपं च नारङ्गे त्रितयं स्थितम् । निषङ्गस्तूर्णसङ्गयोः । निषज्यन्ते बाणा अस्मिन्निति निषङ्गः । निषञ्जनं वा । तूणे इषुधौ यथा—जातामिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः । सङ्गे यथा-गहनवननिषङ्गो मोक्षहेतुर्न कस्य ॥११३॥ निसर्गः सृष्टौ स्वभावे । निसर्जनं निसर्गः । सृष्टौ यथा—जगन्निसर्गसंहार—कारकः परमेश्वरः । स्वभावे यथा—निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः । प्लवगः कपिभेकयोः । अर्कसूते । प्लवेन गच्छति प्लवगः । "नाम्नो गमः" इनि डः । कपौ यथा—प्लवगसैन्यमलूकजिताजितम् । भेके मण्डूके यथा—प्लवगरवविचित्रे तत्र तीरे सरस्याः । अर्कस्य सूतः सारथिररुणः । अर्कादंशुमतः सूतो जातो वा । यदाह—रेवन्तस्त्वर्करेतोजः प्लवगो हयवाहनः । पन्नगस्तु पद्मकोष्ठे भुजङ्गमे । पद्भ्यां न गच्छति पन्नगः । पन्नं छन्नं गच्छति वा । पद्मकोष्ठम् ओषधिविशेषः । भुजङ्गमे यथा – दोलाकेलिनिषण्णपन्नगवधूगीतोत्सवप्रक्रमे ॥ ११४ ॥ परागश्चन्दने रेणौ गिरौ ख्यात्युपरागयोः । स्नानीयपुष्परजसोः ।

*नीलङ्गु कृमिजातिके । भम्भराल्यां प्रसूने च प्लवगः० ।



**परागश्चन्दने रेणौ गिरौ ख्यात्युपरागयोः ।**
**स्नानीयपुष्परजसोः पतङ्गः सूर्यपक्षिणोः ॥११५॥**
**पारते शलभे शालौ पत्राङ्गं रक्तचंदने ॥**
**भूर्जपद्मकयोश्चाऽपि प्रयागो वाजिशक्रयोः ॥११६॥**

परा गच्छति परागः "नाम्नो गमः" इति डः । परश्चासौ रागश्चेति वा । सप्तस्वर्थेषु । चन्दने यथा—ग्रीष्मे परागरस-वासितबाहुमध्या । रेणौ यथा—समूढकर्पूरपरागपाण्डुरम् । गिरिः पश्चिमाचलः । तत्र यथा—परागशृङ्गे रविरस्तमेति । ख्यातिः प्रसिद्धिः । सा च शुभा अशुभा च । तत्र अशुभायां यथा—समपहाय विरागिपरागिणीरलिकदम्बकमम्बुरुहां ततीः । उपरागे सूर्येन्दुग्रहणे यथा—न देयं गणकैर्लग्नं परागे चन्द्रसूर्ययोः । स्नाति अनेन स्नानीयं चूर्णं पिष्टिकादि तत्र यथा—परागोद्वर्त्तितैरङ्गैः । पुष्परजसि यथा—उद्धूतः सरसिजसम्भवः परागः । पतङ्गः सूर्यपक्षिणोः । पारते शलभे शालौ । पतति पतङ्गः । "पतितमीति" अङ्गः । पतौ गच्छति वा "नाम्नो गमः" इति डः । अपतंगति बा पृषोदरादित्वात् । सूर्ये यथा—पतत् पतङ्गप्रतिमस्तपोनिधिः । पक्षिणि यथा—पतङ्गनाथोपरि कैटभारिः ॥११५॥ पारते रसेन्द्रे यथा-तापादुड्डीय पतति पतङ्गः शीतले जले। शलभे यथा—पतङ्गवद्वह्निमुखं विविक्षुः । शालौ शालिविशेषे यथा—पतङ्गास्तपनीयाश्च ये चाऽन्ये शालयः शुभाः। पारते क्लीब इत्यन्ये । पत्राङ्गं रक्तचन्दने । भूर्जपद्मकयोश्चापि । पत्रेष्वङ्गति पत्राणि अङ्गमस्येति वा पत्राङ्गम् । पद्मकम् औषधिभेदः । प्रयागो बाजिशक्रयोः । यज्ञे तीर्थविशेषे च । प्रारब्धो यागोऽत्रानेन अस्मिन् अस्मै वा प्रयागः । प्रयजनं प्रेज्यते वा । वाजिनि शक्रे च

यज्ञे तीर्थविशेषे च प्रयोगस्तु निदर्शने ।
कार्मणे च प्रयुक्तौ च प्रियङ्गू राजसर्षपे ॥११७॥
पिपल्यां फलिनीकङ्ग्वोः पुन्नागः पादपान्तरे ।
जातीफले नरश्रेष्ठे भुजङ्गः सर्पषिङ्गयोः ॥११८॥
मातङ्गः श्वपचो हस्ती मृदङ्गो घोषवाद्ययोः ।
रक्ताङ्गो भौमे रक्ताङ्गं कम्पिल्ये विद्रुमेऽपि च ॥११९॥

यथा–याति प्रयागो गगनेन वेगात् ॥११६॥ यज्ञे यथा-द्विजैः प्रयागः क्रियते नियोगात् । तीर्थविशेषे यथा–लोकः प्रयागवासी कूपे स्नानं समाचरति । प्रयोगस्तु निदर्शने । कर्मणे च प्रयुक्तौ च । प्रयुज्यतेऽनेन प्रयोजनं वा प्रयोगः । निदर्शने उदाहरणे यथा–दृष्टशिष्टप्रयोगोऽहम् । कार्मणे वशीकरणे यथा–योगी प्रयोगेण वशीचकार । प्रयुक्तिर्व्यापारः । तत्र यथा–मुग्धत्वादविदितकैतवप्रयोगा गच्छन्त्यः सपदि पराजयं तरुण्यः । प्रियङ्गू राजसर्षपे । पिपल्यां फलिनी कङ्ग्वोः। प्रीणाति प्रियङ्गुः। "प्रीकैपैनीलेरङ्गुक्" (उ० ७६१) राजसर्षपो राजिका ॥११७॥ पिप्पली कणा । फलिनी श्यामलता । तत्र यथा–प्रियङ्गुश्यामाङ्गः प्रकृतिसुभगः । कङ्गुः पीततण्डुला । तत्र यथा–अणवः प्रियङ्गुकोद्रवमयुष्ठकाः शालिराढकाः। पुन्नागः पादपान्तरे । जातीफले नरश्रेष्ठे । पुमांश्चासौ नागश्च पुन्नागः । पुन्नाग इव प्रधानत्वाद्वा । पादपान्तरनरश्रेष्ठयोर्यथा–वरसहकारकरञ्जकवीरतरोशोकमदनपुन्नागः । भुजङ्गः सर्पषिङ्गयोः । भुजेन गच्छति भुजाभ्यां नृत्यद्भ्यामिव गच्छति वा भुजङ्गः । नाम्नो गमः इति डः । षिङ्गो वेश्यापतिः । द्वयोर्यथा–तमिद्धमाराधयितुं स कर्णकैः कुलैर्न भेजे फणिनां भुजङ्गता ॥११८॥ मातङ्गः श्वपचो हस्ती । मन्यते मातङ्गः । "मने-



रक्ताङ्गा जीवन्तिकायां रथाङ्गः कोकपक्षिणि ।
रथाङ्गं चक्रे वराङ्गं योनौ शीर्षे गुडत्वचि ॥१२०॥
कुञ्जरे च विडङ्गस्तु स्यादभिज्ञकृमिघ्नयोः ।
विसर्गो विसर्जनीये वर्चसि त्यागदानयोः ॥१२१॥

र्मन् मातौ च" (उ० १००) इत्यङ्गः । श्वपचश्चण्डालः । द्वयोर्यथा–मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती । मृदङ्गो घोषवाद्ययोः । मृद्यते मृदङ्गः । विडिविलि (उ०१०१) इति कृदङ्गः । घोषो नादभेदः । वाद्ये यथा–रजनि विरतिशंसी कामिनीनां भविष्यद्विरहविहितनिद्राच्छेदमुच्चैर्मृदङ्गः । रक्ताङ्गो भौमे । रक्तमङ्गमस्य रक्ताङ्गः । भौमो मङ्गलस्तत्र यथा–रक्ताङ्गः पञ्चमस्थः । रक्ताङ्गं कम्पिल्ये विद्रुमेऽपि च । कम्पिल्यम् औषधभेदः । विद्रुमः प्रवालम् ॥११९॥ रक्ताङ्गा जीवन्तिकायां । जीवन्तिका मधुस्रवा । रथाङ्गः कोकपक्षिणि । रथाङ्गं चक्रं तन्नामत्वाद् रथाङ्गः । यथा–रथाङ्गमिथुनाश्रया । रथाङ्गं चक्रे । रथस्याङ्गं रथाङ्गम । यथा–रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः सम्वलिता विरेजिरे । वराङ्गं योनौ शीर्षे गुडत्वचि कुञ्जरे च । वरं प्रधानमङ्गम्, वराङ्गम् । योनौ यथा–अङ्गनानां वराङ्गेषु नीरागो रज्यते कथम् । शीर्षे यथा– गङ्गां वराङ्गे दधतः स्मरारेः । गुडवन्मधुरात्वक् । सुगन्धिवल्ली (छल्ली) विशेषः तत्र यथा–वराङ्गकौतीमधुकविल्वमज्जैलवालुकम् ॥१२०॥ कुञ्जरे यथा–वराङ्गसङ्ग्रामतरङ्गितेषु । विडङ्गस्तु स्यादभिज्ञकृमिघ्नयोः । विड् व्यापकमङ्गमस्य विडङ्गः । विड्यते वा "विडिविलि" (उ० १०१) इति किदङ्गः । अभिज्ञे वाच्यलिङ्गः । कृमिघ्नम् । तत्र

**सम्भोगो भोगरतयोः शुण्डायां सर्वगं जले ।**
**सर्वगस्तु विभौ रौद्रे सारङ्गो विहगान्तरे ।।१२२।।**
**चातके चञ्चरीके च द्विपैणशबलेषु च ।**
**अनघः स्याद् गतपापे मनोज्ञे निर्मलेऽपि च ।।१२३।।**

त्रिलिङ्गः । तत्र यथा—फेनो रसाञ्जनं क्षौद्रं विडङ्गोऽथ मनःशिला । विसर्गो विसर्जनीये वर्चसि त्यागदानयोः । विसृज्यते विसर्गः । विसर्जनीये बिन्दुद्वये यथा—प्रतिकूलवर्णमुपहत लुप्तविसर्गं विसन्धिहतवृत्तम् । वर्चसि अन्नमले यथा—विसर्गः स्वर्गिणां कुतः । त्यागदानयोर्यथा—आदानं हि विसर्गाय सतां वारिमुचामिव ।।१२१।। सम्भोगो भोगरतयोः शुण्डायाम् । सम्भुज्यते सम्भोगः । भोगे यथा—असंभोगादलब्धेव समृद्धिगृद्धिबुद्धिभिः । रते यथा—सम्भोगान्ते मम समुचिते हस्तसम्वाहनायाम् । शुण्डायां यथा—सम्भोगदण्डेन पपौ स नागः । सर्वगं जले । सर्वत्र गच्छति सर्वगम् । यथा—सर्वगं सर्ववल्लभम् । सर्वगस्तु विभौ रुद्रे । विभौ व्यापके वाच्यलिङ्गः । तत्र यथा—सर्वीयं सर्वगं सर्वं सर्वदेवनमस्कृतम् । रुद्रे यथा—स सर्वगः पर्वतपुत्रिकायुतः । सारङ्गो विहगान्तरे । चातके चञ्चरीके च द्विपैणशबलेषु च । सरति सारङ्गः । "सृवृभृभ्यो णित्" (उ० ९९) इति अङ्गः । सारङ्गायति गच्छति वा । सह आरङ्गेण वर्त्तते इति वा । चञ्चरीके पृषोदरादित्वात् । स्त्रीपुंसः । शवले वर्णे पुंसि । तद्वति वाच्यलिङ्गः । षट्स्वर्थेषु शवलवर्जं सर्वेषु यथा—नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढैराविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् । दग्धारण्येष्वधिकसुरभि गन्धमाघ्राय चोर्व्याः सारङ्गास्ते जललवमुचः सूचयिष्यन्ति



**अमोघः सफलेऽमोघा पुनः पथ्याविडङ्गयोः ।**
**उल्लाघो निपुणे हृष्टे शुचिनिरोगयोरपि ।।१२४।।**
**काचिघस्तु मूषिके स्याच्छते कुम्भेच्छमण्डके ।**
**परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेपि च ।।१२५।।**

मार्गम् ।।१२२।। शबले यथा—नारङ्ग मीलसारङ्ग यावन्नो याति पक्वताम् । अथ घान्ताः । अनघः स्याद्गतपापे मनोज्ञे निर्मलेऽपि च । नास्ति अघमस्य अनघः । वाच्यलिङ्गः । सर्वेषु यथा—दिदृक्षमाणाः प्रति रथ्यमीयुर्मुरारिमाराद्नघं जनौघाः ।।१२३।। अमोघः सफले । मुह्यतेऽनेन मोघः । घञ् । मेघादित्वाद् घत्वम्, न मोघोऽमोघः । वाच्यलिङ्गः । यथा—यदमोघमपामन्तरुप्तं बीजमजत्वया । अमोघा पुनः पथ्याविडङ्गयोः । पथ्या हरीतकी । विडङ्गः कृमिघ्नम् । उल्लाघो निपुणे हृष्टे शुचि नीरोगयोरपि । उल्लाघते स्म उल्लाघः । क्ते अनुपसर्गाः क्षीवोल्लाघेति साधुः वाच्यलिङ्गः । चतुर्ष्वपि यथा—उल्लाघः श्लाघ्यते न कैः ।।१२४।। काचिघस्तु मूषिके स्याच्छते कुम्भेच्छमण्डके । कच्यते काचिघः "मघाघङ्घ" (उ० ११०) इति साधुः । मण्डकः प्रदेशविशेषः । परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च । परिहण्यतेऽनेन परिहणनं वा परिघः । "परेर्घः" इति करणेऽलि साधुः । भावेऽपि बहुलाधिकारात् । अस्त्रे यथा—पादपाविद्धपरिघः शिलानिष्पिष्ट मुद्गरः । योगभेदे यथा—शूले मूर्ध्नि मृगौ मघा चपरिघे चित्रा तथा वैधृते । परिसमन्ताद् हननं परिहण्यतेऽनेन वा परिघातः । तत्र यथा—भार्गवस्य सुकृतोऽपि सोऽभवत्स्वर्गमार्गपरिघो दुरत्ययः । अर्गले यथा—नगरपरिघदीर्घाबाहवस्ते ममेते ।।१२५।। पलिघः काचकलशे घटे प्राकारगोपुरे । "परिघस्य

**पलिघः काचकलशे घटे प्राकारगोपुरे ।**
**प्रतिघो रुट्प्रतिघातौ महार्घो लावकाण्डजे ।।१२६।।**
**महामूल्येऽप्यवीचिस्त्वन्तरङ्गे नरकान्तरे ।**
**कवचस्तु परित्राणे पटहे नन्दिपादपे ।।१२७।।**
**क्रकचः करपत्रे स्याद् ग्रन्थिलाख्यतरावपि ।**
**कणीचिः पुष्पितलतागुञ्जयोः शकटेऽपि च ।।१२८।।**

परिघाङ्कयोगे—इति लत्वे पलिघः । त्रिष्वपि यथा—पलिघः सलिलाकुलः । प्रतिघो रुट् प्रतिघातौ । प्रतिहन्यतेऽनेन प्रतिघः । "क्वचित्" इति डे पृषोदरादित्वाद् घत्वम् । रुट् रोषस्तत्र यथा—उद्दामप्रतिघानलप्रतिहतप्रज्ञः स विज्ञोऽप्यभूत् । प्रतिघाते यथा—सह निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति । महार्घो लावकाण्डजे । महामूल्येऽपि । महानर्घोऽस्य महार्घः । महामूल्ये वाच्यलिङ्गः । लावकोऽभिधानोऽण्डकः पक्षी लावकाण्डजः ।।१२६।। महामूल्ये यथा—यतो महार्घाणि भृतान्यनूनैः प्रस्थै-र्मुहुर्भुरिभिरुच्छिखानि । अथ चान्ताः । अवीचिस्त्वतरङ्गे नरकान्तरे । न विद्यन्ते वीचयोऽस्मिन् अवीचिः । अव्यते वा "मृश्रिकणि" (उ० ६२७) इति ईचिः । अतरङ्गं कल्लोलरहितम् । तत्र वाच्यलिङ्गः । नरकान्तरे स्त्रीपुंसः । अतरङ्गे यथा—अवीचिर्निर्वाति सरससरसीवेयमचला । नरकान्तरे यथा—अवीचौ पच्यन्ते सुकृतरहितायातनशतैः । कवचस्तु परि(तनु)त्राणे पटहे नन्दिपादपे । कूयते कवते वा कवचः । "कल्यवि" (उ०११४) इति अचः । तनुत्राणे पुंक्लीबः । तत्र यथा—रथी निषङ्गी कवची धनुष्मान् पटह आनकः । नन्दि पादपो गर्दभाण्डवृक्षः ।।१२७।। क्रकचः करपत्रे स्याद् ग्रन्थिलाख्यतरावपि । क्रात्यति



**नमुचिर्दितिजे कामे नाराचो लोहसायके ।**
**जलेभे नाराच्येषण्यां प्रपञ्चो विप्रलम्भने ।।१२९।।**
**विस्तारे सञ्चये चापि मरीचिः कृपणे घृणौ ।**
**ऋषिभेदेऽथ मारीचः कक्कोले याजकद्विपे ।।१३०।।**

क्रम्यते वा क्रकचः । "क्रकचादयः" (उ० ११५) इति साधुः । करपत्रे पुंक्लीबः । तत्र यथा—दारुदारं विदार्यन्ते दारुगैः क्रकचैः क्वचित् । कणीचिः पुष्पितलतागुञ्जयोः शकटेऽपि च । कणति कणीचिः । "मृश्रिकणि" (उ० ६२७) इति ईचिः । त्रिष्वर्थेषु । शकटे पुंसि । शेषयोः स्त्रियाम् ।।१२८।। नमुचिर्दितिजे कामे । न मुञ्चति नमुचिः । "नाम्युपान्त्य" इति किदिः । नखादित्वान्न-ञोऽदभावः । दितिजे दानवे यथा—नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः । कामे स्मरे यथा—आविध्येराक्रमैः किञ्चिन्नमुचिर्न विमुञ्चति । नाराचो लोहसायके । जलेभे । नरमञ्चति नराच् तस्यापत्यं (तस्यायं) नाराचः । नारमञ्चति वा । लोहसायके यथा—नाराचैः कृतवीर्यनन्दनवधूबाष्पप्रियं भावुकैः । जलेभो जलहस्ती । नाराच्येषण्याम् । एषणी वैद्यशलाका । प्रपञ्चो विप्रलम्भने । विस्तारे सञ्चये चापि । प्रपञ्चनं प्रपञ्चः । विप्रलम्भनं विप्रतारणम् । तत्र यथा—धूर्ताः प्रपञ्चचतुराः परिवञ्चयन्ते ।।१२९।। विस्तारे यथा—कैः कै-रत्र वचः प्रपञ्चरचनाचातुर्यमाचर्यते । सञ्चये यथा—बन्धूकविद्रुम-जपाकुसुमप्रपञ्चोदन्तच्छदस्य सपरिच्छद एष सर्वः । मरीचिः कृपणे घृणौ । ऋषिभेदे । म्रियतेऽसावनेन वा मरीचिः । "मृश्रिकणि" (उ० ६२७) इति ईचिः । कृपणे वाच्यलिङ्गः । घृणौ स्त्रीपुंसः । ऋषौ पुमान् । कृपणे यथा—मरीचिर्म्रियमाणोऽपि

**रक्षोभेदेऽथाण्डजः स्यात्कक्किण्डेऽहौ खगे झषे ।**
**अण्डजा तु मृगनाभौ अङ्गजो मन्मथे सुते ॥१३१॥**
**मदे केशे *अङ्गजं रक्ते कम्बोजो नीवृदन्तरे ।**
**शङ्खहस्तिभेदयोश्च करजो नखवृक्षयोः ॥१३२॥**

विश्राणयति न नो धनम् । घृणौ यथा-संनिगृह्य तिमिरं मरीचिभिः। ऋषिभेदः सप्तऋषिमध्यवर्त्ती । यदाह—मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहस्तथा वसिष्ठश्च महातेजाः सप्तमः परिकीर्त्तितः। अथ मारीचः कक्कोले याजकद्विपे । रक्षोभेदे । म्रियतेऽनेन मारीचः। म्रियते रीचण् । कक्कोलो वृक्षभेदः । याजकस्य द्विपो याजकद्विपः ॥१३०॥ रक्षोभेदो रावणमातुलः । तत्र यथा—हिंस्रासु बाहु मारीचमिश्रानः परिवृण्वतेः । अथ जान्ताः । अथाण्डजः स्यात्कक्किण्डेऽहौ खगे झषे । अण्डाज्जातोऽण्डजः । कक्किण्डः कृकलासः। अहिः सर्पः । खगे यथा—नीडक्रोडेऽण्डजश्रेणीतुण्डैः खण्डयतिच्छदम् । झषो मत्स्यः । अण्डजा तु मृगनाभौ । मृगनाभिः कस्तूरिका । अङ्गजो मन्मथे सुते । मदे केशे । अङ्गादङ्गजे वा जायतेऽङ्गजः । चतुर्ष्वपि यथा—अङ्गजः कस्य न प्रियः ॥१३१॥ अङ्गजं रक्ते । रक्ते रुधिरे यथा—गजाङ्गजैस्तत्र वहन्ति नद्यः। कम्बोजो नीवृदन्तरे । शङ्खहस्तिभेदयोश्च । काम्यते कम्बोजः । उटजादयः (उ० १३४) इति साधुः । नीवृदन्तरे देशभेदे यथा—कम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः । शङ्खभेदे हस्तिभेदे च यथा—कम्बोजः पूज्यते न कैः । करजो नखवृक्षयोः । करे जायते करजः । कीर्यते वा । उटजादित्वात्साधुः । नखे यथा—दन्तक्षतानि करजैश्च विपाटितानि । वृक्षः करञ्जाख्यः ॥१३२॥ काम्बोजः

* प्र० सुंदरे च काम्बोजो० ।



**काम्बोजः पुनरश्वानां भेदे पुन्नागपादपे ।**
**वलक्षखदिरे चापि काम्बोजी माषपर्णिका ॥१३३॥**
**कारुजः कलभे फेने वल्मीके नागकेसरे ।**
**गैरिके शिल्पिनां चित्रे स्वयंजाततिलेऽपि च ॥१३४॥**
**कुटजोऽगस्त्ये द्रुभेदे द्रोणे गिरिजमभ्रके ।**
**शिलाजतुनि लोहे च गिरिजा मातुलुङ्ग्युमा ॥१३५॥**

पुनरश्वानां भेदे पुन्नागपादपे । वलक्षखदिरे चापि । कम्बोजदेशे भवः काम्बोजः । काम्यते वा उटजादित्वात्साधुः । अश्वभेदे यथा—यात्रानेहसि यस्य दिग्विजयिनः काम्बोजवाहावली । वीखोल्लेखविकासिनि क्षितिरजःपङ्क्ते वियच्चुम्बति । वलक्षखदिरः श्वेतखदिरः । काम्बोजी माषपर्णिका । माषपर्णिका ओषधिविशेषः ॥१३३॥ कारुजः कलभे फेने वल्मीके नागकेसरे । गैरिके शिल्पिनां चित्रे स्वयंजाततिलेऽपि च । किरति कीर्यते वा कारुजः "उटजादयः" (उ० १३४) इति साधुः । कारोर्जातो वा केन अरुजो वा । सप्तस्वर्थेषु । कलभस्त्रिंशदब्दको हस्ती । फेनो डिण्डीरः। वल्मीको नाकुः । नागकेसरो वृक्षः । गैरिकं धातुभेदः । शिल्पिनां कारूणां चित्रं विस्मयकारि कर्म । तत्र वाच्यलिङ्गः । स्वयंजाततिलोऽरण्यतिलः ॥१३४॥ कुटजोऽगस्त्ये द्रुभेदे द्रोणे । कुटात् घटाज्जातः कुटजः । कुटति वा । "कुटे रजः" (उ० १३०) इति अजः । कुटादित्वान्न गुणः । अगस्त्ये द्रोणाचार्ये च यथा—कुटजेन निपीतोऽयं महानपि रणोदधिः । द्रुभेदे वृक्षभेदे यथा—कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् । गिरिजमभ्रके । शिलाजतुनि लोहे च । गिरौ जातं गिरिजम् । अभ्रकं स्वच्छपत्रम् । शिलाजतु धातुभेदः । लोहं ताम्रादि । सर्वेषु

जलजं कमले शङ्खे नीरजं पद्मकुष्टयोः ।
परञ्जोऽसौ तैलयन्त्रे क्षुरिका फलफेनयोः ।।१३६।।

बाहुजस्तु स्वयंजाते तिले क्षत्रियकीरयोः ।
भूमिजौ नरकाङ्गारौ भूमिजा जनकात्मजा ।।१३७।।

यथा–राजते गिरिजैः गिरिः । गिरिजा मातुलुङ्ग्युमा । मातुलुङ्गी बोजपूरी । उमायां यथा-अवोचद्यं पश्यत्यवतु स शिवः सा च गिरिजा ।।१३५।। जलजं कमले शङ्खे । जले जायते जलजम् । कमले यथा–विहङ्गमानां जलजातपत्रैः । शङ्खे यथा–ततः प्रियोपात्त-रसेऽधरोष्ठे निधाय दध्मौ जलजं कुमारः । नीरजं पद्मकुष्टयोः । नीरे जातं नीरजम् । निश्चितं रजत्यनेन वा । स्थादित्वात्कः । पद्मे यथा–ब्रीडयारुददिवालिविरावैर्नीलनीरजमगच्छदधस्तात् । कुष्टं गन्धद्रव्यविशेषः । परञ्जोऽसौ तैलयन्त्रे क्षुरिकाफलफेनयोः परं प्रकृष्टं जयति जायते वा परञ्जः । "क्वचित्" इति डः । पृषोदरादित्वात् मोऽन्तः । असिः खड्गः । तैलयन्त्रं दारुमयम् । क्षुरिकाफलं कृपाणिका पत्रम् ।।१३६।। बाहुजस्तु स्वयंजाततिले क्षत्रियकीरयोः । बाहुभ्यां जातो बाहुजः । बहिर्जातो वा । पृषोदरादित्वात् । क्षत्रिये यथा–सम्प्रत्यस्य समस्तबाहुजभुज-क्रोधस्य निर्वास्यतः। क्षुंदानो धनुरैन्दुशेखरमहो जातो भवानिन्धनम्। कीरः शुकः । भूमिजौ नरकाङ्गारौ । भूमेर्जातौ भूमिजौ । नरकौ नरकासुरः । अङ्गारो मङ्गलः । द्वयोर्यथा–को भूमिजान्नो-द्विजते जनौघः । भूमिजा जनकात्मजा । जनकात्मजा सीता । तत्र यथा–जनकः स निजां कन्यां ददौ रामाय भूमिजाम् । वलजं गोपुरे सस्ये क्षेत्रसङ्गरयोरपि । सदाकारे । वलते वलजम् । "वलैर्वेन्तश्च वा" इति अजः । वलाज्जायते वा । सदाकारे



वलजं गोपुरे सस्ये क्षेत्रसङ्गरयोरपि ।
सदाकारे वलजा तु पृथिव्यां वरयोषिति ।।१३८।।

वनजो मुस्तके स्तम्बेरमे वनजमम्बुजे ।
वनजा तु मुद्गपर्ण्यां सहजः सहसम्भवे ।।१३९।।

निसर्गे च सामजस्तु सामोत्थे कुञ्जरेऽपि च ।
हिमजो मेनका पुत्रे हिमजा पार्वती शठी ।।१४०।।

वाच्यलिङ्गः । क्षेत्रे तात्स्थ्यात्सस्येऽपि च त्रिलिङ्गः । तयोर्यथा–त्वं समीरण इव प्रतीक्षितः कर्षकेण वलजां पुपूषता । गोपुरे पुरद्वारे यथा–रूरुधुर्वलजं बलात् । सङ्गरे सङ्ग्रामे यथा–न युद्धशौण्डा वलजे वलन्ते । सदाकारे भद्राकृतौ यथा–वन्ध्यास्ते साधवो वलजाः । वलजा तु पृथिव्यां वरयोषिति । द्वयोर्यथा–स्वबलैर्बल-वत्तोऽपि युध्यन्ते वलजाकृते ।।१३८।। वनजो मुस्तके स्तम्बेरमे । वनं जलम् अरण्यं वा तत्र जातो वनजः । मुस्तको मुस्ता । स्तम्बेरमे गजे यथा–वनजैरवनेर्जयः । वनजमम्बुजे । यथा–दीर्घेध्वमी नियमिताः पटमण्डपेषु । निद्रां विहाय वनजा-क्षवनायुदेश्याः । वनजा तु मुद्गपर्ण्याम् । मुद्गपर्णी ओषधिः । सहजः सहसम्भवे । निसर्गे च । सहजायते सहजः । "क्वचित्" इति डः । सह सम्भवे वाच्यलिङ्गः । तत्र यथा–सहजकालकूट-शिक्षितक्रौर्येव लक्ष्मीः ।।१३९।। निसर्गे स्वभावे यथा–सहज-चापलदोषसमुद्धतः । सामजस्तु सामोत्थे कुञ्जरेऽपि च । साम्नो जातः सामजः । सामोत्थे वाच्यलिङ्गः । तत्र यथा–राजा तु सामजं सन्धिं द्विषां न बहुमन्यते । कुञ्जरे यथा–दन्तादन्तैराहताः सामजानां जग्मुर्भङ्गं न स्वयं सामजाताः । हिमजो मेनकापुत्रे । हिमाज्जातो हिमजः । मेनकापुत्रो

**क्षेत्रज्ञावात्मनिपुणौ दोषज्ञः प्राज्ञवैद्ययोः ।**
**सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शङ्करेऽपि च ॥१४१॥**
**अवटः कूपखिलयोर्गर्त्ते कुहकजीविनि ।**
**अरिष्टो लशुने निम्बे फेनिले कंककाकयोः ॥१४२॥**

मैनाकः । तत्र यथा–ययौ महेन्द्रवित्रस्तो हिमजो हि महोदधौ । हिमजा पार्वती शढी । पार्वत्यां यथा–हिमजा महिमोत्सवे । शढी ओषधिभेदः ॥१४०॥ अथ ज्ञान्ताः । क्षेत्रज्ञावात्मनिपुणौ । क्षेत्रं शरीरं पात्रं वा जानाति क्षेत्रज्ञः । निपुणे वाच्यलिङ्गः । आत्मनि यथा–क्षेत्रज्ञक्षेत्रयोर्भेदो विज्ञातव्यो विचक्षणैः । निपुणे यथा–क्षेत्रज्ञः कुरुते किञ्चिन्नाविचार्य हिताहिते । दोषज्ञः प्राज्ञवैद्ययोः । दोषं जानाति दोषज्ञः । वाच्यलिङ्गः । द्वयोर्यथा–बुद्धिमलरोगदोषज्ञः । खलेऽपि मंखः । यथा–गुणदोषौ गुणी वेत्ति दोषज्ञो दोषमेव हि । सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शङ्करेऽपि च । सर्वं जानाति सर्वज्ञः । जिनेन्द्रे यथा–सर्वज्ञ एव हि जानाति परिणामं हि कर्मणाम् । सुगते बुद्धे यथा–प्रणम्य सर्वज्ञमपेतविप्लवम् । शङ्करे यथा–देवं प्रणम्य सर्वज्ञं सृष्टिसंहारकारकम् ॥१४१॥ अथ टान्ताः । अवटः कूपखिलयोर्गर्त्ते कुहकजीविनि । अव्यते अवटः । "दिव्यवि" (उ०१४२) इति अटः । चतुर्ष्वर्थेषु । कूपे यथा–अन्धेनान्ध इवाकृष्टः पात्यते नरकावटे । खिले यथा–पाटयत्यवटं बटुः । गर्त्ते यथा–को नाम स्यादवटकुहरालोकनेव्यस्य कल्पः । कुहकमैन्द्रजालं तेन जीवति कुहकजीवी । तत्र वाच्यलिङ्गः । तत्र यथा–अवटः कपटे पटुः । प्रमत्तेऽपि मङ्खः । यथा–अवटाटङ्कसङ्केतनिकेतनसमाश्रयाम् । अरिष्टो लशुने निम्बे फेनिले कङ्क(दैत्य)काकयोः । न रिष्य-



**अरिष्टं सूत्यगारेऽन्तचिह्ने तक्रे शुभेऽशुभे ।**
**अवटुर्गर्तान्धुघाटासूत्कटस्तीव्रमत्तयोः ॥१४३॥**
**उच्चटा दम्भचर्यायां, प्रभेदे लशुनस्य च ।**
**करटः करिगण्डे स्यात्कुसुम्भे निन्द्यजीवने ॥१४४॥**

तेऽरिष्टः । नास्ति रिष्टं क्षेममत्र वा । लशुनं कन्दभेदः । निम्बफेनिलौ वृक्षौ । कङ्कः पक्षी । काके वायसे यथा–अरिष्टैरिव मूर्तैस्तदरिष्टैर्वलितं गृहम् । दैत्यविशेषेऽपि मङ्खः । यथा–दुष्टरिष्टकठोरकण्ठवलना विश्लिष्टकण्ठस्रजा ॥१४२॥ अरिष्टं सूत्यगारेऽन्तचिन्हे तक्रे शुभेऽशुभे । शुभमात्रेऽशुभमात्रे च क्लीबे । तद्वति वाच्यलिङ्गः । सूते प्रसवस्यागारं गृहं सूत्यागारं तत्र यथा–अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा । अन्तचिन्हे मरणचिन्हे यथा– षाण्मासिकमरिष्टं तत् । तक्रे यथा–अरिष्टमिष्टं हि विशिष्टपुंसाम् । शुभे यथा–अरिष्टाः सन्तु पन्थानः । अशुभे यथा – अरिष्टकर्मकार्येषु वर्जनीयं प्रयत्नतः । आसवभेदेऽपि मङ्खः । अरिष्टमिष्टैः सह सेवते सदा । अवटुर्गर्तान्धुघाटासु । अव्यते अवटुः । "अव्यर्ति गृभ्योऽटुः" (उ०७६२) घाटायां स्त्रीपुंसः । शेषयोः स्त्रियाम् । यदाह–अवटुः कथिता घाटा कूपगर्त्तेषु सूरिभिः । गर्त्तः श्वभ्रम् । अन्धुः कूपः । तयोर्यथा–अवटोर्निकटे घटं घटं घाटा कृकाटिका । तत्र यथा–अवटौ लकुटा हतः । उत्कटस्तीव्रमत्तयोः । अधिक उत्कटः । "सम्प्रोन्नेः संकीर्णप्रकाशाधिकसमीपे" (७–१–१२५) इति उदोऽधिकार्थे कट प्रत्ययः । उद्भिन्नौ कटावस्य वा वाच्यलिङ्गः । तीव्रे यथा–कोपाटोपसमुद्भटोत्कटसटा कोटेरिभारेः शनैः । मत्ते यथा–मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ।

काके वाद्ये दुर्दुरुटे, नवश्राद्धेऽथ कर्कटः ।
कुलीरे करणे स्त्रीणां, राशौ खगेऽथ कर्कटी ॥१४५॥
शाल्मलीफलवालुङ्क्योः कार्यटो जतुकार्यिणोः ।
कीकटः कृपणे निस्वे, देशभेदे तुरङ्गमे ॥१४६॥

उच्चटादम्भे चर्यायां प्रभेदे लशुनस्य च। उच्चटति भिनत्ति उच्चटा। दम्भः कैतवम्। चर्या चरणम्। लशुनस्य प्रभेदो लशुनविशेषः करटः करिगण्डे स्यात्कुसुम्भे निन्द्यजीवने । काके वाद्ये दुर्दुरुटे नवश्राद्धे । करोति करटः । "दिव्यवि" (उ०१४२) इति अटः । केति शब्दं रटति वा। के शिरसि रटति वा। करिगण्डे यथा–अलिकुलसेवितकरटितटम् । कुसुम्भं रागद्रव्यम् । निन्द्यजीवनं कुत्सितवृत्तिः ॥१४४॥ दुर्दुरूटे दुर्मुखे वाच्यलिङ्गः । तत्र काके वाद्यभेदे च यथा–ते कर्णकोटिकटवः करटा रटन्ति । नवश्राद्धं प्रेतस्य एकादशाहश्राद्धम् । तत्र यथा–करटवटकभोजी लम्पटो विप्रखेटः । अथ कर्कटः । कुलीरे करणे स्त्रीणां राशौ खगे । कर्कि: सौत्रः कर्कति कर्कटः । "दिव्यवि" (उ०१४२) इति अटः । कुलीरो जलचरभेदः । तत्र यथा–कर्कटसधर्माणो हि राजपुत्रा जनकभक्षाः । स्त्रीणां करणं वात्स्यायनप्रसिद्धम् । राशौ यथा–पुनर्वसुपाद एकः पुष्याश्लेषौ च कर्कटः । खगः पक्षिविशेषः । अथ कर्कटी ॥१४५॥ शाल्मलीफलवालुङ्क्योः । शाल्मली वृक्षभेदस्तस्य फलम् । वालुङ्की चिर्भटी । द्वयोर्यथा–दशनशकटकोट्या कर्कटीं त्रोटयन्ति । कार्यटो जतुकार्यिणोः । कारिणमटति कार्यटः । कार्याय वा अटति पृषोदरादित्वात् । जतु लाक्षा । कार्यी कार्यार्थी । तत्र वाच्यलिङ्गः । यथा–लम्पटाः कार्यटा



कुरण्टो झिण्टिकाभेदे कुरण्टी दारुपुत्रिका ।
कुक्कुटः कुक्कुभे ताम्रचूडे वह्निकणेऽपि च ॥१४७॥
निषादशूद्रयोः पुत्रे, कूपीटमुदरे जले ।
चक्राटो धूर्त्ते दीनारे, विषवैद्येऽथ चर्पटः ॥१४८॥

विटाः । कीकटः कृपणे निस्वे देशभेदे तुरङ्गमे । ककते कीकटः । "कपटकीकटादयः" (उ० १४४) इति साधुः । चतुर्ष्वर्थेषु । कृपणो मितंपचः । निस्वो निर्धनः । तयोर्वाच्यलिङ्गः । द्वयोर्यथा–कीकटादानसङ्कटाः । देशभेदो मगधाख्यः । यदाह–कीकटा मगधाह्वयाः ॥१४६॥ कुरण्टो झिण्टिकाभेदे रण्टिः सौत्रः । कुत्सितं रण्टति कुरण्टः । झिण्टिका भेदः पीताकिंटी । यन्निघण्टुः–सैरेयके सहचरो झिण्टीमहाचरश्च सः । सतुरक्तः कुरुवकः स्यात्पीतस्तु कुरण्टकः । कुरण्टी दारुपुत्रिका । दारुमयीपुत्रिका दारुपुत्रिका । कुक्कुटः कुक्कुभे ताम्रचूडे वह्निकणेऽपि च । निषादशूद्रयोः पुत्रे । कोकते कुक्कुटः । नर्कुटकुक्कुटो (उ० १५५) इति साधुः । कुक्कुभः कुम्भकारकुक्कुटः । ताम्रचूडे पुंक्लीबः । तत्र यथा–अयि विजहीहि दृढोपगू(ह)ढनं त्यज नवसङ्गमभीरु वल्लभम् । अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः । वह्निकणः स्फुलिङ्गः । तत्र यथा–उड्डीनैः शतकोटिकुक्कुटशतैः ॥१४७॥ निषादशूद्रयोः पुत्रे इति निषादाच्छूद्रायां यो जायते। कुक्कुटी मिथ्याचर्य्यादावपि । कूपीटमुदरे जले । कल्पते कूपीटम् । तृ कृ कूपि (उ०१५१) इति कीटः। उदरे यथा–गूढोद्भिन्नकूपीटपीठमकरोद्दंधासुरं यः शिवः। जले यथा–कूपाट्योनेरुदियाय तेजः । अत्र हि कूपीटं योनिरस्य कूपीटयोनिः । यत्स्मृतिः अद्भ्योऽग्निर्ब्रह्मतः

चपेटे स्फारविपुले, पर्पटे चिपिटः पुनः ।
पृथुके पिच्चिततते चिरिण्टी तु सुवासिनी ॥१४९॥
तरुणी च जकुटस्तु, वार्ताककुसुमे शुनि ।
यमले त्र्यङ्गटो धौताञ्जन्यां शिक्यभिदीश्वरे ॥१५०॥

---

क्षत्रम् । चक्राटो धूर्ते दीनारे विषवैद्ये । चक्रेण दम्भेन चक्रं दम्भं वा अटति चक्राटः । धूर्त्ते वाच्यलिङ्गः । दीनारो नाणकविशेषः । अथ चर्पटः चपेटे स्फारविपुले पर्पटे । चरत्यनेन चर्यते वा चर्पटः । "कपटकीकटादयः" (उ० १४४) इति साधुः ॥१४८॥ चपेटे यथा–कैदभश्चपेटैर्भिन्नः । स्फारमुद्भटं विपुलं विस्तीर्णं स्फारं च तद् विपुलं च स्फारविपुलम् । तत्र वाच्यलिङ्गः । पर्पटो भक्ष्यविशेषः । चिपिटः पुनः । पृथुके पिच्चिततते । निशब्दात् नासानतितद्वतोरर्थयोः "नेरिनपिट" (७-१-१२८) इति पिटप्रत्यये चिपिटः । तत्तुल्यत्वाच्चिपिटः । पृथुके अभ्योषे यथा – चिपिटमवटकण्ठे सैरिका भक्षयन्ति । पिच्चितं कुट्टितं सत् ततं विस्तीर्णं पिच्चिततततम् । तत्र वाच्यलिङ्गः । यथा–केचिच्चिपिटनर्कुदाः । चिरिण्टी तु सुवासिनी तरुणी च । चिरेः सौत्रात् "टिण्टश्चर् च वा" (उ० १५०) इति चिरिण्टी । सुवासिनी शब्देन रूढ्या गृहिणी वृद्धाऽप्युच्यते इति मङ्खः ॥१४९॥ तरुणी द्वितीयवया सर्वास्त्री । द्वयोर्यथा–कष्टं चिरिण्टी चिरकालनष्टा । जकुटस्तु वार्ताककुसुमे शुनि । यमले । जायते जकुटः । "नर्कुट कुक्कुट" (उ० १५५) इति साधुः । वार्त्ताककुसुमे पुंक्लीबः । यमलं युग्मम् । त्र्यङ्गटो धौताञ्जन्यां शिक्यभिदीश्वरे । त्रीणि अङ्गानि अटति त्र्यङ्गटः पृषोदरादित्वात् । धौताञ्जनी



त्रिकूटं सिन्धुलवणे, त्रिकूटस्तु सुवेलके ।
त्रिपुटौ तीरसातीनौ, त्रिपुटा त्रिवृदोषधौ ॥१५१॥
सूक्ष्मैलायां मल्लिकायां, द्रोहाटो मृगलुब्धके ।
चतुष्पदी प्रभेदे च, बिडालव्रतिकेऽपि च ॥१५२॥
धाराटश्चातकेऽश्वे च, निर्दटो निष्प्रयोजने ।
निर्दयेऽन्यदोषे रते निष्कुटो गृहवाटिका ॥१५३॥

---

श्वेतगृहगोधा । शिक्यं काचस्तस्यभित् । अनयोः पुंक्लीबः । ईश्वरः शम्भुः ॥१५०॥ त्रिकूटं सिन्धुलवणे (लक्षणे) । त्रीणि कूटान्यस्य त्रिकूटम् । सिन्धुलवणम् समुद्रलवणं । त्रिकूटस्तु सुवेलके । सुवेलकः पर्वतविशेषः । तत्र यथा–दुर्गं त्रिकूटः परिखा समुद्रः । त्रिपुटौ तीरसातीनौ । त्रीणि पुटान्यस्य त्रिपुटः । तीरं कूलम् । सातीनः कलायाख्यो धान्यविशेषो मालवप्रसिद्धः । त्रिपुटा त्रिवृदोषधौ ॥१५१॥ सूक्ष्मैलायां मल्लिकायाम् । सूक्ष्मैला गन्धद्रव्यभेदः । मल्लिका विचकिलः । द्रोहाटो मृगलुब्धके । चतुष्पदीप्रभेदे च बिडालव्रतिकेऽपि च । द्रोहेण अटति द्रोहाटः । द्रुह्यति वा । "कपाट विराट" (उ०१४८) इति साधुः । चतुष्पदीप्रभेदे यथा– द्रोहाटपाठकोऽप्येष लभते न वराटकम् । अत्र वाच्यलिङ्गः । बिडालव्रतिको दाम्भिकः ॥१५२॥ धाराटश्चातकेऽश्वे च । धारा धाराभिर्वा अटति धाराटः । द्वयोर्यथा–धाराटश्चाटुलम्पटः । निर्दटो निष्प्रयोजने । निर्दयेऽन्यदोषे रते । निर्दत्ते निर्दटः । "कपटकीकटादयः" (उ० १४४) इति साधुः । वाच्यलिङ्गः त्रिष्वपि यथा–नेष्टः कस्यापि निर्दटः । निष्कुटो गृहवाटिका । केदारकः कपाटश्च । निर्गतः कूटात् मन्दिरात्, निष्कुटति वा निष्कुटः । गृह-

**केदारकः कपाटश्च, पर्पटो भेषजान्तरे ।**
**पिष्टविकृतौ परीष्टिः, परीक्षापरिचर्ययोः ॥१५४॥**
**स्यात्पर्कटी प्लक्षतरौ, पूगादेर्नूतने फले ।**
**पिच्चटस्तु नेत्ररोगे, पिच्चटं त्रपुसीसयोः ॥१५५॥**
**वर्वटी व्रीहिभिद्वेश्या, [1]भाकूटः शैलमीनयोः ।**
**[2]भावाटो भावके साधुनिवेशे कामुकेऽपि [3]च ॥१५६॥**

वाटिकायां यथा–ग्रीष्मं निर्गमयन्ति निष्फुटकुटक्रोडेषु भूमीभृतः ॥१५३॥ ह्रस्वः केदारः केदारकः । पर्पटो भेषजान्तरे । पिष्टविकृतौ पृणाति पर्पटः "कपट कीकटादयः" (उ० १४४) इति साधुः । द्वयोर्यथा–पर्पटः कर्पटोपमः । परीष्टिः परीक्षापरिचर्ययोः । पर्येषणं परीष्टिः । परीक्षा गवेषणम् । परिचर्या सेवा । द्वयोर्यथा– इष्टा परीष्टिः शिष्टानां दुष्टकर्म विपाटनी ॥१५४॥ स्यात्पर्कटी प्लक्षतरौ पूगादेर्नूतने फले । पृच्यते पर्कटी "कपटकीकटादयः" (उ० १४४) इति साधुः । गौरादित्वाद् ङीः। द्वयोर्यथा–संक्रीडन्ते विकटदशनामर्कटा पर्कटीभिः । पिच्चटस्तु नेत्ररोगे । पिच्चयति पिच्च्यते वा पिच्चटः । "कपटकीकटादयः" (उ० १४४) इति साधुः । यथा–दृष्टिः पिच्चटपिच्छिला प्रवयसाम् । पिच्चटं त्रपुसीसयोः । द्वयोर्यथा–गण्डभित्तिर्विभात्येषा चञ्चत्पिच्चटकुण्डला ॥१५५॥ वर्वटी व्रीहिभिद्वेश्या–वर्वति वर्वटी "कपट" (उ० १४४) इति साधुः । व्रीहिभिदि यथा–मेरौ वर्वन्ति वर्वटी । वेश्या गणिका तत्र यथा–वर्वटी चीनकर्पटा । भाकूटः शैलमीनयोः । भान् कूटोऽस्य भाकूटः । शैलविशेषे

१ प्र० बार्वटः कान्तिपुञ्जके । वारुण्डे मकरे पोते–भाकुटः० ।
२ प्र० भार्याटः पटहाजीवे लोभात्स्वस्त्रीसमर्पके । ३ प्र० नटे ।



**मर्कटस्तु कपावूर्णनाभे स्त्रीकरणान्तरे ।**
**मर्कटी करञ्जभेदः [1]शूकशिम्ब्यथ मोरटम् ॥१५७॥**
**सप्तरात्रात्परं क्षीरेऽङ्कोठपुष्पेक्षुमूलयोः ।**
**मोरटा तु मूर्विकायां मोचाटः कृष्णजीरके ॥१५८॥**
**चन्दने कदलीगर्भे [2]वर्णाटश्चित्रकारिणि ।**
**गायने स्त्रीकृताजीवे वराटा हंसयोषिति ॥१४९॥**

मीनविशेषे च भावाटो भावके साधुनिवेशे कामुकेऽपि च । भावं भावेन वा अटति भावाटः । वाच्यलिङ्गः । भावको भावयिता । साधुनिवेशो भद्राकारः । कामुकः कामी ॥१५६॥ मर्कटस्तु कपावूर्णनाभे स्त्रीकरणान्तरे । मर्किः सौत्रः । मर्कति मर्कटः । "दिव्यवि" (उ० १४२) इति अटः । कपौ यथा–नीता मर्कटकेन कामपि दशां धिग् दैवमावश्यकम् । ऊर्णनाभो लूता । स्त्रीणां करणान्तरं वात्स्यायनप्रसिद्धम् । मर्कटी करञ्जभेदः शूकशिम्बी करञ्जो नामवृक्षस्तस्य भेदः । शूकशिम्बी कपिकच्छूः । –अथ मोरटम् । सप्तरात्रात्परं क्षीरेऽङ्कोठपुष्पेक्षुमूलयोः । मुरति मोरटम् "कपट" (उ० १४४) इति साधुः ॥१५७॥ त्रिष्वपि यथा–मोरटं पित्तनाशनम् । मोरटा तु मूर्विकायां मूर्विका ज्याहेतुस्तृणविशेषः । मोचाटः । कृष्णजीरके । चन्दने कदलीगर्भे–मुञ्चति मोचाटः । "कपाट विराट" (उ० १४८) इति साधुः । मोचामटति वा ॥१५८॥ चन्दने कदलीगर्भे च यथा–उच्चाटयन्ति मोचाटा निदाघेदाह-

१ प्र० शूकशिम्बी च वानरी । बीजं च राजकर्कट्याः प्राचीनामलकस्य च ।
२ मु० मू० रेवटो दक्षिणावर्तशङ्खे जाङ्गुलिकेऽपि । रेवटो (?) सोरटे वेणौ, स्याद्वातुलवराहयोः ॥ वर्णाटो० ।

**गन्धोल्यां चाथ विकटः कराले पृथुरम्ययोः ।**
**वेकटो जाततारुण्ये मणिकारेऽथ वेरटः ॥१६०॥**
**मिश्रीकृते च नीचे च वेरटं बदरीफले ।**
**शैलाटो देवले शुक्लकाचे सिंहकिरातयोः ॥१६१॥**

विप्लवम् । वर्णाटश्चित्रकारिणि । गायने स्त्रीकृताजीवे–वर्णान् अटति वर्णाटः । वाच्यलिङ्गः । चित्रकारी चित्रकरः । गायनो गाथकः । स्त्रीकृतः आजीवो जीविका यस्यासौ स्त्रीकृताजीवः । त्रिष्वपि यथा–वर्णाटो भाटकाधीनः । वरटा हंसयोषिति । गन्धोल्यां च । वृणोति वरटा । "दिव्यवि" (उ० १४२) इति अटः । हंसयोषिति यथा–वरटेव वरारोहा सविलासमटाट्यते ॥१५९॥ गन्धोली तैलाद्याख्यः क्षुद्रजन्तुः । तत्र स्त्रीपुंसः । अथ विकटः कराले पृथुरम्ययोः । विस्तृतो विकटः "कटः" ७/१/१२४ इति कटप्रत्ययः । विशेषेण कटति वा । वाच्यलिङ्गः । कराले यथा–मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना । पृथौ रम्ये च यथा–गन्तव्यं देवकुले द्रष्टव्या विकटकटितटा वेश्या । वेकटो जाततारुण्ये मणिकारे–विङ्क्ते वेकटः "कपट" (उ० १४४) इति साधुः । जाततारुण्ये वाच्यलिङ्गः । द्वयोर्यथा–वेकटैर्घट्यते मणिः । अथ वेरटः । मिश्रीकृते च नीचे च वेरम् । अटति वेरटः । पृषोदरादित्वात् । वाच्यलिङ्गः ॥१६०॥ वेरटं बदरीफले । बदरीफलं कुवलम् । शैलाटो देवले शुक्लकाचे सिंहकिरातयोः । शैलमटति शैलाटः । चतुर्ष्वर्थेषु । देवलऋषिविशेषः । किरातो भिल्लः । संसृष्टं तु सङ्गते स्याच्छुद्धे च वमनादिना । संसृज्यते स्म संसृष्टम् । वाच्यलिङ्गः । सङ्गते यथा–दत्ताः कर्णेन विषसंसृष्टमोदकाः ।



***अम्बष्ठो विप्रतो वैश्यातनये नीवृदन्तरे ।**
**अम्बष्ठा स्यादम्ललोण्यां पाठायूथिकयोरपि ॥१६२॥**
**कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वंतिमांगुलौ ।**
**कमठः कच्छपे दैत्यविशेषे मुनिभाजने ॥१६३॥**

वमनविरेचनादिना शुद्धे यथा–संसृष्टे देयमौषधम् ॥१६१॥ अथ ठान्ताः । अम्बष्ठो विप्रतो वैश्यातनये नीवृदन्तरे । अम्बायां तिष्ठति अम्बष्ठः । "गोऽम्बाम्ब" (२–३–३०) इति षत्वम् । "ङ्यापो बहुलं नाम्नि" २–४–९९ । इति ह्रस्वः । अमति वा । "पष्ठैधिठादयः" (उ० १६६) इति साधुः । विप्रेण यो वैश्यायां जन्यते तत्र । नीवृदन्तरे देशविशेषे । अम्बष्ठा स्यादम्ललोण्यां पाठायूथिकयोरपि । अम्ललोणी पाठा च औषधी । यूथिका पुष्पतरुः ॥१६२॥ कनिष्ठोऽल्पेऽनुजे यूनि अतिशयेन अल्पो युवा वा कनिष्ठः । "अल्प यूनोः कन् वा" ७–४–३३ । इति इष्ठे कनादेशः । वाच्यलिङ्गः । अल्पे यथा–प्रासादस्य कनिष्ठस्य शृणु पार्वति लक्षणम् । अनुजे लघुभ्रातरि यथा–ज्येष्ठेऽनूढे परिवेत्ता कनिष्ठो दारसङ्ग्रही । यूनि यथा–कनिष्ठः पापनिष्ठो हि पारदारिकतादिभिः । कनिष्ठा त्वंतिमांगुलौ । यथा–वितस्तिः स्यात्कनिष्ठया । कमठः कच्छपे दैत्यविशेषे मुनिभाजने । के जले मठति वसति कमठः । काम्यते वा । मृ जृ श कमि (उ० १६७) इति अठः । कच्छपे पुंसि । अन्यत्र पुंक्लीबः । कच्छपे यथा–निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः । दैत्यविशेषे यथा–कमठे धरणेन्द्रे च स्वोचितं कर्मकुर्वति । प्रभुस्तुल्य-

*प्र० संसृष्टं तु सङ्गते स्याच्छुद्धे च वसनादिना ।
हर्मटः कच्छपे प्रोक्तः सहस्रकिरणेऽपि च ॥ अम्बष्ठो० ।

**जरठः कर्कशे जीर्णे नर्मठौ षिड्गचूचुकौ ।**
**प्रकोष्ठः कूर्पराधस्ताद्भूपकक्षान्तरेऽपि च ॥१६४॥**
**हस्ते च विस्तृतकरे प्रतिष्ठागौरवे स्थितौ ।**
**छन्दोजातौ यागसिद्धौ मत्कुष्ठौ धान्यमन्थरौ ॥१६५॥**

---

मनोवृत्तिः पार्श्वनाथः श्रियेऽस्तु वः । मुनिभाजने यथा–भुक्ते मठे कमठपाणिरसौ मुनीन्द्रः ॥१६३॥ जरठः कर्कशे जीर्णे । जीर्यति जरठः "मृ जॄ श" (उ० १६७) इति अठः । कर्कशे गुणे पुंसि तद्वति जीर्णे च वाच्यलिङ्गः । द्वयोर्यथा–अयमति जरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः । नर्मठौ षिड्गचूचुकौ । नर्मणि तिष्ठति नर्म्मठः । पृषोदरादित्वात् । षिड्गो विटः । चूचुकं स्तनमुखम् । द्वयोर्यथा–नर्म्मठः कामकर्मठः । प्रकोष्ठः कूर्पराधस्ताद्भूपकक्षान्तरेऽपि च । हस्ते च विस्तृतकरे । प्रकुष्णाति प्रकुष्यते वा प्रकोष्ठः । "कुषेर्वा" (उ०१६४) इति ठः । कूर्पराधस्तात् कूर्पराधोभागे कलाचिकायां यथा–कनकवलय-भ्रंसरिक्त–प्रकोष्ठः । भूपकक्षान्तरे यथा–वल्गन्ति वाहाः प्रथमप्रकोष्ठे ॥१६४॥ विस्तृतकरे हस्ते यथा–गोष्ठप्रकोष्ठैर्मिमते हि काष्ठम् । प्रतिष्ठा गौरवे स्थितौ छन्दोजातौ यागसिद्धौ । प्रतिष्ठानं प्रतिष्ठीयतेऽनया वा प्रतिष्ठा । "उपसर्गादातः" (५–३–११०) इत्यङ् । गौरवे स्थितौ च यथा–विपक्ष मखिलीकृत्य प्रतिष्ठा खलु दुर्लभा । अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते । छन्दोजातिश्चतुरक्षरा तत्र यथा–उक्तात्युक्ता तथा मध्या प्रतिष्ठा सुप्रतिष्ठिका । यागसिद्धौ यथा–एष वै प्रतिष्ठा नाम यज्ञः । मर्यादा देवादिस्थापनयोरपि मङ्क्षः । मर्यादायां यथा–कृतप्रतिष्ठा निवसन्ति सन्तः । देवादिस्थापने



**लघिष्ठो भेलकेऽत्यल्पे स्याद्वरिष्ठस्तु तित्तिरे ।**
**वरिष्ठं मरिचे ताम्रे वरोरूतमयोरपि ॥१६६॥**
**वैकुण्ठो वासवे विष्णौ श्रीकण्ठः कुरुजाङ्गले ।**
**शङ्करे चाथ साधिष्ठोऽत्यर्थे दृढतमेऽपि च ॥१६७॥**
**कारण्डो मधुकोशेऽसौ कारण्डवे दलाटके ।**
**कूष्माण्डौ गणकर्कारू कूष्माण्ड्यावम्बिकौषधी ॥१६८॥**

---

यथा–इष्टिः प्रतिष्ठासमये पुरारेः । मत्कुष्ठौ धान्यमन्थरौ मद्यते मत्कुष्ठः । "पष्ठैधिठादयः" (उ० १६६) इति साधुः । मन्थरे वाच्यलिङ्गः । धान्ये यथा–मत्कुष्ठाः कुष्ठनाशनाः । मन्थरे यथा–मत्कुष्ठगामी सततं सकामी ॥१६५॥ लघिष्ठो भेलकेऽत्यल्पे स्यात् । अतिशयेन लघुर्लघिष्ठः । भेलक उडुपः । अत्यल्पे वाच्यलिङ्गः । तत्र यथा–ज्येष्ठे लघिष्ठो रजनिर्बभूव । वरिष्ठस्तु तित्तिरौ । अतिशयेन वरो वरिष्ठः । तित्तिरिः पक्षी । वरिष्ठं मरिचे ताम्रे वरोरुतमयोरपि । अतिशयेन उरु वरिष्ठ "प्रियस्थिर" ७–४–३८ । इति वरादेशः । वरोरुतमयोर्वाच्यलिङ्गः । तयोर्यथा– वसिष्ठस्तमभाषिष्ट वरिष्ठं रघुपुङ्गवम् । ॥१६६॥ वैकुण्ठो वासवे विष्णौ । विकुण्ठाया अयं वैकुण्ठः । वासवे यथा–वैकुण्ठो दशकण्ठेन कुण्ठशक्तिर्विनिर्ममे । विष्णौ यथा–वैकुण्ठकमठः पायात् । श्रीकण्ठः कुरुजाङ्गले शङ्करे च । श्रीः कण्ठे यस्य श्रीकण्ठः । कुरुजाङ्गलं तीर्थविशेषः । शङ्करे यथा–श्रीकण्ठकण्ठच्छविः । अथ साधिष्ठोऽत्यर्थे दृढतमेऽपि च । अतिशयेन साधुः साधिष्ठः । अतिशयेन बाढो वा । बाढन्तिकयोर्साधनेदौ (७–४–३७) इति साधादेशः । वाच्य-
१० लिङ्गः । द्वयोर्यथा–अधिष्ठितमसाधिष्ठैः सुष्ठु राज्यं न तिष्ठति

**कोदण्डः कार्मुके देशभेदभ्रूलतयोरपि ।**
**गारुडं तु मरकते विषशास्त्रेऽथ तित्तिडः[1] ॥१६९॥**
**दैत्यभेदे[2] तित्तिडी तु कालदासे महीरुहे ।**
**तिन्तिडी चुक्रे चिञ्चायां निर्गुण्डी सिन्धुवारकः ॥१७०॥**

॥१६७॥ अथ डान्ताः । कारण्डो मधुकोशेऽसौ कारण्डवेदलाटके । किरति कीर्यते वा कारण्डः । पिचण्डैरण्डः (उ०१७६) इति साधुः चतुर्षु अर्थेषु । मधुकोशे मधुमण्डकः । असिः खड्गः । कारण्डवदलाडकौ पक्षिणौ । कूष्माण्डौ गणकर्कारू । कुष्णाति कुष्यते वा कूष्माण्डः । पिचण्डैरण्ड इति साधुः । गणः केलिकिलाक्षः । कर्कारौ यथा—ब्रूत नूतन कूष्माण्डफलानां के भवन्त्यमी । भ्रूणेऽपि । कूष्माण्ड्यावम्बिकौषधी । अम्बिकायां देवताविशेषे यथा—मृगेन्द्रवाहना नित्यं कूष्माण्डी कमलेक्षणा ॥१६८॥ कोदण्डः कार्मुके देशभेदभ्रूलतयोरपि । कोटिमान् दण्डोऽस्य कोदण्डः । पृषोदरादित्वात् कूयते वा । पिचण्डैरण्ड (उ० १७६) इति साधुः । कार्मुके पुंक्लीबः । तत्र यथा—स्फुटिष्यति न कोदण्डस्त्रुटिष्यति न वा गुणः। भ्रूलतायां यथा—कोदण्डे दृश्यते ज्योतिः । गारुडं तु मरकते विषशास्त्रे (विषोद्भवे) । गरुडस्येदं गरुडो देवताऽस्येति वा गारुडम् । गरुडमधिकृत्य कृतम् वा । अमोऽधिकृत्यग्रन्थे (६–३–१९८) इत्यण् । मरकते यथा—राशिर्मणीनामिव गारुडानां स पद्मरागः फलितो विभाति । विषशास्त्रे यथा—नष्टं विषं गारुडमन्त्रजापैः । अथ तित्तिडः । दैत्यभेदे । तिर्यक् ताडयति ताड्यते वा तित्तिडः । पृषोदरादि-

१ मु० मू० विषोद्भवे तरण्डो बडिशीसूत्रबद्धस्तु निभेलके तित्तिडो० ।
२ दैत्यभेदे स्याद्यमदाशेथ तित्तिडी०।



**नीलशेफाल्यब्जकन्दः प्रचण्डः स्यात्प्रतापिनि ।**
**वलक्षकरवीरेऽपि प्रकाण्डः स्तम्बशस्तयोः ॥१७१॥**
**स्कन्धमूलान्तरे च द्रोः पिचण्डोऽवयवे पशोः ।**
**उदरे चाथ पूत्यण्डो गन्धैणे गन्धकीटके ॥१७२॥**

त्वात् ॥१६९॥ तित्तिडी तु कालदासे महीरुहे । गौरादित्वात् ङीः । कालस्य यमस्य दासः कालदासः । तिन्तिडी चुक्रे चिञ्चायां । तिन्तिडशैलभवत्वात् तिन्तिडी । तिम्पति वा । विहडकहोड (उ० १७२) इति साधुः । चुक्रम् अम्लवेतसः । चिञ्चा अम्लिका । निर्गुण्डी सिन्धुवारकः । नीलशेफाल्यब्जकन्दः । गुडुण् वेष्टने निर्गुण्डयति निर्गुण्डी । सिन्धुवार–नीलशेफाल्यौ वृक्षौ । अब्जकन्दः पद्मकन्दः । सिन्धुवारे यथा—निर्गुण्डी धूपगुण्डितम् ॥१७०॥ प्रचण्डः स्यात्प्रतापिनि । वलक्षकरवीरेऽपि । प्रचण्डते प्रचण्डः । प्रतापिनि वाच्यलिङ्गः । तत्र यथा—प्रचण्डा चामुण्डा समरडमरं खण्डयतु वः । वलक्षकरवीरः श्वेतकरवीरः। प्रकाण्डः स्तम्बशस्तयोः । स्कन्दमूलान्तरे च द्रोः । प्रवृद्धं काण्डमस्य प्रकाण्डः । प्रकण्यते वा । कण्यणि (उ० १६९) इति णित् डः । पुंक्लीबः । स्तम्बे यदा—कुशप्रकाण्डेन ममार्ज भाण्डम् । शस्ते प्रशस्ते यथा—जानाम्यह त्वां पुरुषं प्रकाण्डम् ॥१७१॥ द्रोर्वृक्षस्य स्कन्धमूलयोरन्तरं मध्यभागस्तत्र यथा—कण्डूयमानाः सरलप्रकाण्डे । पिचण्डोऽवयवे पशोः । उदरे च । अपिचण्डते पिचण्डः । पृषोदरादित्वादलोपः । पिचेः सौत्रस्य वा । पिचण्डैरण्ड इति साधुः । पशोरवयवे यथा—पिचण्डखण्डानि चखाद चण्डी । उदरे यथा—पिचण्डिलश्चण्डगतिः कथं भवेत् । अत्र हि पिचण्डोऽस्त्यस्येति । लोमपिच्छादेः (७–२–२८)

**भेरुण्डौ भीषणखगौ भेरुण्डा देवताभिदि ।**
**'मारण्डोऽण्डे भुजङ्गानां मार्गे गोमयमण्डले ॥१७३॥**
**मार्तण्डस्तरणौ क्रोडे वरण्डो वदनामये[2] ।**
**अन्तरावेदौ सङ्घे च [3]वतण्डा शारिका क्षुरी ॥१७४॥**

इति–इलः । अथ पूत्यण्डो गन्धैणे गन्धकीटके । पूतिरहितं पूतिप्रधानं वाऽण्डं मुष्कः कोशो वाऽस्य पूत्यण्डः । गन्धैणः कस्तूरिकामृगः । गन्धकीटः सुरभिकीटकः ॥ १७२ ॥ भेरुण्डौ भीषणखगौ । बिभेत्यस्मादिति भेरुण्डः । पिचण्डैरण्ड इति साधुः । भीषणे भीष्मे वाच्यलिङ्गः । खगः पक्षी । तत्र यथा–विसंहता विनश्यंति भेरुण्डा इव पक्षिणः । भेरुण्डा देवताभिदि । भेरुण्डा रुण्डमालायुगलवलयिता । मारण्डोऽण्डे भुजङ्गानां मार्गे गोमयमण्डले । मारयन्ति मार्यते वाऽत्र मारण्डः । पिचण्डैरण्ड इति साधुः । त्रिषु अर्थेषु । भुजङ्गानामण्डः कोशः । मार्गोऽध्वा । गोमयस्य मङ्गलार्थं मण्डलम् गोमयमण्डलम् ॥१७३॥ मार्तण्डस्तरणौ क्रोडे । मृतण्डस्यापत्यं मार्तण्डः । ऋषिवृष्णि (६–१–६१) इत्यण् । मारयति वा । पिचण्डैरण्ड इति साधुः । तरुणौ यथा–अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः । क्रोडः सूकरः । वरण्डो वदनामये । अन्तरावेदौ सङ्घे च । व्रियते वरण्डः । जॄ कॄ तॄ (उ० १७३) इति अण्डः। वदनामये यथा–वरण्डेनार्दितं तुण्डम् । अन्तरावेदौ यथा–वरण्ड क्रमदण्डाभ्यामारुरोह द्विपः क्रुधा । सङ्घे यथा–इक्षोर्वरण्डं क्षिपति स्म शुण्डया । वतण्डा शारिका क्षुरी । वर्त्तिः । अवतनोति वतण्डा । पञ्चमाङ्गः (उ० १६८) इति साधुः । वा वाप्योः

१ मु० म० मारुण्डस्तु २ वदनव्यथा ३ वरण्डा



**वर्त्तिर्वारुण्डस्तु कर्णदृग्मले सेकभाजने ।**
**गणिस्थराजे वितण्डा कच्चीशाके शिलाह्वये* ॥१७५॥[1]**
**करवीर्यां वादभेदे शिखण्डो बर्हचूडयोः ।**
**सरण्डः स्यात्कृकलासे भूषणान्तरधूर्त्तयोः ॥१७६॥**

(३-२-५६) इति अवस्य वादेशः शारिका पक्षिणी । क्षुरी कृपाणी ॥१७४॥ वर्त्तिर्दशा । वारुण्डस्तु कर्णदृग्मले सेकभाजने । गणिस्थराजे । वृणोति वारुण्डः। पिचण्डैरण्ड इति साधुः। कर्णस्य दृशश्च मलः कर्णदृग्मलः। गणिस्थराजो वृक्षभेदः। तयोः पुंक्लीबः । सेकभाजने यथा–वारुण्डेन मुनेः कन्या तरुषण्डं निषिञ्चति । वितण्डा कच्चीशाके शिलाह्वये । करवीर्यां वादभेदे । वितन्यते वितण्डा पञ्चमाङ्गः (उ० १६८) इति डः । चतुर्ष्वर्थेषु । कच्चीशाकः शाकभेदः । शिलाह्वय ओषधम् ॥१७५॥ करवीरी लताभेदः । वादभेदे यथा–जल्पः प्रतिपक्षस्थापनाहीनो वितण्डा । शिखण्डो बर्हचूडयोः । शिखाभिर्डयते शिखण्डः । क्वचित् इति डे पृषोदरादित्वात्साधुः । बर्हे कलापे यथा–खड्गसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः । चूडायां काकपक्षे यथा–तौ पितुर्नयनजेन वारिणा किञ्चिदुक्षितशिखण्डकावुभौ । सरण्डः स्यात्कृकलासे भूषणान्तरधूर्त्तयोः । सरति सरण्डः । जॄ कॄ (उ० १७३) इत्यण्डः। कृकलासः सरटः । भूषणान्तरं भूषणभेदः। धूर्त्ते शठे वाच्यलिङ्गः । तत्र यथा–सरण्डैः खण्डिता मही ॥१७६॥ अथ ढान्ताः । अध्यूढ ईश्वरे । अध्युह्यते स्म अध्यूढः ईश्वरो विभुः । अध्यूढा कृतसापत्न्ययोषिति । कृत सापत्न्यं

१ मु० मू० फणिराजद्वारपिण्डयोर्वारुण्डः खग उर्द्रिणि (?) वितण्डा वार्तभेदे स्यादतकच्चीशाके शिलाह्वये ।

***अध्यूढ ईश्वरेऽध्यूढा कृतसापत्न्ययोषिति ।**
**आषाढो मलयगिरौ व्रतिदण्डे च मासि च । ॥१७७॥**
**उपोढ ऊढे निकटेऽप्युदूढः पीवरोढयोः ॥**
**प्ररुढो जठरे वृद्धे प्रगाढो दृढकृच्छ्रयोः ॥१७८॥**

यया सा कृत सापत्न्या सा चासौ योषिच्च या एकस्या उपरि द्वितीया परिणीयते । आषाढो मलयगिरौ व्रतिदण्डे च मासि च । आषाढो देवता यस्य आषाढः। देवता (६–२–१०१) इत्यण् । आषाढा प्रयोजनमस्येति वा । विशाखाषाढान्मन्थदण्डे (६–४–१२०) इति अण् । आषाढी पूर्णमासी अस्येति वा । सास्य पौर्णमासी (६–२–९८) इत्यण् । मलयगिरौ यथा–प्ररूढं बाढमाषाढे चन्द्रनैर्दृढगन्धिभिः । व्रतिदण्डे यथा–अथाजिनाषाढधरः प्रगल्भवाक् । मासे मासविशेषे यथा–आषाढस्य प्रथम दिवसे मेघमाश्लिष्ट सानुम् ॥१७७॥ उपोढ ऊढे निकटेऽपि । उपोह्यते स्म उपोढः। वाच्यलिङ्गः । ऊढे यथा–उपोढ रागेण विलोलतारकम् । निकटं समीपम् । तत्र यथा–उपोढरागणि यथा ग्रहणे निषित्रेऽरुमा विशेषौच्छ्वसितम्बभूव । उदूढः पीवरोढयोः ॥ उदुह्यते स्म उदूढः वाच्यलिङ्गः। ऊढे यथा–उदूढलोकत्रितयेन साम्प्रतं । गुरुर्धरित्रीक्रियते तरां त्वया । प्ररूढो जरठे वृधे । प्ररोहति स्म प्ररूढः । वाच्यलिङ्गः । द्वयोर्यथा–प्ररूढरोमां कुरु दन्तुरेण । प्रगाढो दृढकृच्छ्रयोः । प्रगाह्यते स्म प्रगाढः । वाच्यलिङ्गः । दृढे यथा–प्रगाढप्रौढबाहवः । भृशेऽपि । यदाह-प्रगाढं कृच्छ्रमिच्छन्ति प्रगाढं वलवद्भृशम् ॥१७८॥ वारुढः शम्बले वस्त्राञ्चलेऽग्नौ पञ्जरेररौ । वार्भिरुह्यते स्म वारूढः पञ्चस्वर्थेषु । अररिः कपाटम् । विरूढोऽङ्कुरिते जाते । विरोह-

* संपिण्डस्तनये प्रोक्तो दायादे सदृशेऽपि च । अध्यूढ० ।



**वारुढः शम्बले वस्त्राञ्चलेऽग्नौ पञ्जरेऽररौ ।**
**विरूढोऽङ्कुरिते जाते विगूढो गर्ह्यगुप्तयोः ॥१७९॥**
**समूढः पुञ्जिते सद्योजाते भुग्नेऽनुपप्लुते ।**
**संरूढोऽङ्कुरिते प्रौढेऽरुणोऽर्केऽनूरुपिङ्गयोः* ॥१८०॥**
**सन्ध्यारागे बुधे कुष्टे निःशब्दाव्यक्तरागयोः ।**
**अरुणा त्रिवृत्तिश्यामामञ्जिष्ठाऽतिविषासु च । ॥१८१॥**

ति स्म विरूढः । वाच्यलिङ्गः । अङ्कुरिते यथा–शतावरी विरूढानि गुडुचीकोमलाम्लिका । जाते यथा–गङ्गप्रवाहाम्बु विरूढशष्पं गौरीगुरोर्गह्वरमाविवेश । विगूढो गर्ह्यगुप्तयोः। विगुह्यते स्म विगूढः । वाच्यलिङ्गः । द्वयोर्यथा–प्रकाशयेन्नैव विगूढकार्यम् । ॥१७९॥ समूढः पुञ्जिते सद्योजाते भुग्नेऽनुपप्लुते । समुह्यते स्म समूढः । वाच्यलिङ्गः । चतुर्ष्वपि यथा–गूढः समुज्झति समूढः तृणां धरित्रीम् । पक्वेऽपि वल्लभटीका यथा–समूढकर्पूरपरागपाण्डुरम् । संरूढोऽङ्कुरिते प्रौढे । संरोहति स्म संरूढः । वाच्यलिङ्गः । द्वयोर्यथा–हर्म्याग्रसंरूढतृणाङ्कुरेषु । तेजोविषह्यं रिपुमन्दिरेषु । अथ णान्ताः । अरुणोऽर्केनूरुपिङ्गयोः । सन्ध्यारागे बुधे कुष्टे निःशब्दाव्यक्तरागयोः । इयर्ति अर्यते वाऽरूणः । ॠकृवृधृदारिभ्य उणः । पिङ्गा व्यक्तरागयोर्गुणयोः पुंसि । तद्वति निःशब्दे च वाच्यलिङ्गः । अर्के यथा-अरुणकरोद्गम एष वर्त्तते । अनूरौ सौर्यसारथौ । यथा-कल्लाय तावदारुणेन तमो निरस्तम् । पिङ्गे यथा–हिमरुचिररुणिम्ना राजते रज्यमानैर्जरवकमलकन्दच्छेदगौरैर्मयूखैः ॥१८०॥ सन्ध्यारागे

* मुद्रितमूले–समीढो मूत्रिते घने । अभीक्ष्णं तु भृशे नित्येऽप्यरुणोऽनूरुसूर्ययोः ॥

**अभीक्ष्णं तु भृशं नित्यमिरिणं शून्य ऊषरे ॥**
**इन्द्राणी शच्यां निर्गुण्ड्यां स्त्रीकरणेऽप्यथोषणा ॥१८२॥**
**कणोषणं तु मरिचं करुणो रसवृक्षयोः ।**
**करुणा तु कृपायां स्यात्करणं क्षेत्रगात्रयोः ॥१८३॥**

सान्ध्यद्युतौ यथा–अरुणेन कृताः सायं दिशः कौसुम्भवाससः । बुधे सौम्ये यथा–सम्प्रत्यप्राच्च्यामरुणः समुद्गतः । कुष्टे कुष्टभेदे यथा–अरुणालिङ्गितं वपुः । निःशब्दः शब्दरहितः । अव्यक्तरागेऽव्यक्तलौहित्ये यथा – निद्राविगमारुणलोचनायाः । लोहितेऽपि । यथा – परिसरणमरुणचरणे रणरणकमकारणं कुरुते । अरुणा त्रिवृत्तिश्यामामञ्जिष्ठाऽतिविषासु च । चतस्रोऽप्योषधयः । स्त्रियाम् ॥१८१॥ अभीक्ष्णं तु भृशं नित्यम् । अभीक्ष्यते अभीक्ष्णम् । भ्रूणतृणेति साधुः । द्वयोर्यथा–अभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम् । इरिणं शून्य ऊषरे । ऋश् गतौ । ऋणाति इरिणम् । ऋद्रुहेः कित् । (उ० १९५) इति इणः । शून्ये वाच्यलिङ्गः । ऊषरेऽप्यन्ये । द्वयोर्यथा–संसारे रिणकल्पवृक्षभवतः पादारविन्दद्वयम् । इन्द्राणी शच्यां निर्गुण्ड्यां स्त्रीकरणेऽपि । इन्द्रस्य भार्या इन्द्राणी । वरुणेन्द्ररुद्र (२–४–६२) इति ङीः । आन् वांतः । इन्द्रोऽप्यनित्यनया वा । शच्यां यथा–सिञ्चन्ति नित्यमिन्द्राण्यो घुसृणैरावणाङ्गम् । अथोषणा । कणा । ओषति उषणा । नन्द्याद्वित्वाद् अनः ॥१८२॥ कणा पिप्पली । ऊषणं तु मरिचं । मरिचं कृष्णम् । करुणो रसवृक्षयोः । कीर्यते करुणः । ऋ कृ वृ धृदारिभ्य उणः। (उ०१९६) रसे यथा – शृङ्गारहास्यकरुणारौद्रवीर – भयानकाः । वृक्षे यथा–तरुणकरुणवल्ली फुल्लमुल्लासयन्त्यः । दीनेऽपि । तत्र



**गीताङ्गहारसंवेश–भिक्षुकायस्थ संहतौ ।**
**वर्णानांस्पृष्टतादौ च योगिनामासनादिषु । ॥१८४॥**
**हृषीके साधकतमे बवादौ च कृतावपि ॥**
**करणःशूद्राविट पुत्रे कङ्कणं करभूषणे । ॥१८५॥**

वाच्यलिङ्गः । यथा–करुणमपि समर्थं मानिनां मानभेदे रुदितमुदितमस्त्रं योषितां विग्रहेषु । करुणा तु कृपायां स्यात् । कृपा दया तत्र यथा–करुणाभराञ्चितपुटा वीरस्य वो दृष्टयः । करणं क्षेत्रगात्रयोः । गीताङ्गहारसंवेश–भिक्षुकायस्थ–संहतौ । वर्णानां स्पृष्टतादौ च योगिनामासनादिषु हृषीके साधकतमे बवादौ च कृतावपि । क्रियतेऽनेन कृतिर्वा करणम् । किरति कीर्यते वा । तृ कृ शृ (उ०१८७) इति अणः। क्षेत्रं केदारः। तत्र यथा–ग्रन्थिपर्णकिरणेषु विचेरुः । गात्रे यथा–उपमानमभूद्विलासिनां करणं यत्तव कान्तिमतया ॥१८३॥ गीतभेदे यथा–तत्रैलाकरणं ढिङ्की वर्तनी ज्याम्बडस्तथा । अङ्गहारभेदः । स्थिर–हस्त–पर्यस्ततारकादिर्द्वात्रिंशत्प्रकारः । तत्र यथा–करणैरुल्वणैः केयं भ्रातर्नृत्यति नर्तकी । संवेशो निधुवनं तस्य भेदो वात्स्यायनोक्तः । तत्र यथा–नवनवकरण–परायण–रमणी–लीलारसेन तरुणानाम् । कायस्थोऽध्यक्षादेरुपलक्षणं तेषां संहतिः समूहः । तत्र बवबालवादौ च यथा–करणं करोतु राजन् सकले भुवने त्वदीय करणानि । वर्णानां स्पृष्टतादौ यथा–स्पृष्टं करणं स्पर्शानाम् । योगिनामासनादिषु यथा–करणानि पुनर्भद्रासनादीनि विदुर्बुधाः ॥१८४॥ हृषीके इन्द्रिये यथा–आख्यातमन्तः करणैर्विशङ्कैः । साधकतमे यथा–येन क्रियते तत्करणम् । कृतौ यथा–सर्वोपकार–करणै–कपरायणेन । कायस्थे इत्येके । कायस्थकर्मणि इत्यपरे । करणः

११

**मण्डने हस्तसूत्रे च कल्याणं हेम्नि मङ्गले ।**

***कत्तृणं रोहिणं फञ्जा करेणुस्तु मतङ्गजे ॥१८६॥**

शूद्राविट पुत्रे । शूद्रायां वैश्याज्जाते इत्यर्थः । कङ्कणं कर-भूषणे । मण्डने हस्तसूत्रे च । ककुङ्गतौ । कङ्कते कङ्कणम् । तृकृशृ (उ० १८७) इति अणः । पुंक्लीबः । करभूषणे यथा–उद्वेल्लद्भुजवल्लि–कङ्कण–झणत्कारस्तदादुः सहः ॥१८५॥ मण्डने प्रसाधने यथा– मसृण–घुसृणाङ्कैः कुर्वते कङ्कणानि । हस्तसूत्रं प्रतिसरः । तत्र यथा–कङ्कणमोचनाय गच्छामि । शिरोभूषणेऽपि । यथा–सिन्दूरितानेकप–कङ्कणाङ्किता तरङ्गिणी वेणिरिवायता भुवः । कल्याणं हेम्नि मङ्गले । कल्यते कल्याणम् । कल्याणपर्याणादयः (उ० १९३) इति साधुः । द्वयोर्यथा–यत्कल्याणं तस्य तु वह्नि विशतोऽपि कल्याणम् । कत्तृणं रौहिषं फञ्जा । कुत्सितं तृणमस्य कत्तृणम् । "तृणे जातौ" (३–२–१३२) इति कोः कदादेशः रौहिषं तृणजातिः । फञ्जा शाकविशेषः । द्वयोर्यथा–तं मुष्टिभिः कत्तृणवत्पुपोष । करेणुस्तु मतङ्गजे । द्विरदस्य च योषायां कर्णिकारतरावपि कृणोति करोति वा करेणुः । कृहृभू (उणादि ७७२) इति एणुः । के मूर्ध्नि रेणुरस्य वा । मतङ्गजे तद्योषायां च स्त्रीपुंसः । कर्णिकारतरौ पुंसि । मतङ्गजे हस्तिनि यथा–करेणुः प्रस्थितोऽनेको रेणु-

* अरणिस्तु भवेदग्निमन्थे निर्मन्थ्यदारुणि ॥ इन्द्राणी तु शचीसिन्दुवारयोः करणे स्त्रियाः । इरिणं तूषरे शून्येऽपीक्षणं दर्शने दृशि ॥ उषणा तु कणायां स्यादूषणं मरिचे मतम् । एषणी व्रतमार्गानुसारिण्यां च तुलाभिदि ॥ कङ्कणं करभूषायां हस्तसूत्रे च शेखरे । कत्तृणं रौहिषं फञ्जा कल्याणं हेम्नि मङ्गले ॥



**द्विरदस्य च योषायां कर्णिकारतरावपि ।**

**कारणं घातने हेतौ करणे कारणा पुनः ॥१८७॥**

**यातना कार्मणं मन्त्रादियोगे कर्मकारके ।**

**काकणी मानदण्डस्य तुरीयांशे पणस्य च ॥१८८॥**

र्घण्टाः सहस्रशः ॥ ॥१८६॥ द्विरदस्य योषायां हस्तिन्यां यथा–ददौ सरः पङ्कजरेणुगन्धिगजाय गण्डूषजलं करेणुः । कारणं घातने हेतौ करणे । कृञ् हिंसायाम् इत्यस्य हन्त्यर्थत्वाच्चुरादित्वे "चुरादिभ्यो णिच्" (३–४–१७) इति णिचि । ततो भावेऽनटि कारणम् । करोति वा कारणमिति साधुः क्रियतेऽनेन करणम् ततः स्वार्थेऽण् वा । घातने यथा – कारणोपहितमानसस्य ते कारणा निरयवह्निषु स्थिता । हेतौ यथा–नाकारणरुषां संख्या संख्याताः कारणक्रुधः । करणे साधकतमे यथा–भक्तिर्यमश्च श्रद्धा च कारणं मोक्षसंपदः । कारणा पुनः । यातना । णिवेत्त्यास (५–३–१११) इति अने कारणा ॥१८७॥ यातना नरकवेदना तस्यां यथा–कारणा निरयवह्निषु स्थिता । कार्मणं मन्त्रादि योगे कर्मकारके । वृद्धोपदिष्टं कर्मैव कार्मणम् । "कर्मणः सन्दिष्टे" (७–२–१६७) इति अण् । कर्मैव वा कार्मणम् । प्रज्ञादित्वादण् । मन्त्रादियोगे यथा–कार्मणत्वमगमद्रणेषु । कर्म च तत्कारकं च कर्मकारकम् । काक(कि)णीमानदण्डस्य तुरीयांशे पणस्य च । कृष्णलायां वराटे च । केक्यते काकणिः । "ककेर्णित्" (उ० ६४०) इति अणिः । ङ्यां काकणी । तुरीयांश इति मानदण्डस्य पणस्य च काकाक्षिगोलकन्यायेनाभिसम्बध्यते । मानदण्डश्चतुष्करः । पणतुरीयांशे यथा–पञ्चाहतैश्चतुर्भिर्वराटकैः काकिणी चैका ॥१८८॥ कृष्णला

**कृष्णलायां वराटे च कृपाणी कर्त्तरी क्षुरी ।**
**कृपाणोऽसौ क्षेपणी तु नौदण्डजालभेदयोः ।।१८९।।**
**कौङ्कणः स्याज्जनपदे कौङ्कणं त्वायुधान्तरे ।**
**ग्रहणं स्वीकृतौ बन्द्यां धीगुणे शब्द आदरे ।।१९०।।**

गुञ्जा । वराटे कपर्दे यथा—असिधाराक्रयक्रीता वरमेकापि काकिणी । मानभेदे प्रसृति मध्यलक्षणेऽपि मञ्जुः । यथा—दरिद्रः काकिणीं दद्यात् । चक्रवर्त्ति—रत्नविशेषेऽपि । कृपाणी कर्त्तरी क्षुरी । कल्पते छेदनाय कृपाणी । कृपि विषि (उ० १९१) इति आणक् । ङ्यां कृपाणी । कर्त्तर्यां यथा—कृत्तः कृपाण्या हतकेशसंचयः । छुर्यां यथा—द्रोहं चक्रे कस्यचित्स्वा कृपाणी । कृपाणोऽसौ । असौ खड्गे यथा—हे हरत दक्षिणमृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् । क्षेपणी तु नौदण्डजालभेदयोः । क्षिप्यतेऽनयाऽस्यां वा क्षेपणी । द्वयोर्यथा—जलनिधिजलमध्ये क्षेपणीं निक्षिपन्ति ।।१८९।। कौङ्कणः स्याज्जनपदे । कुक्ष्यते कौङ्कणः । चिक्कणकुक्कण (उ० १९०) इति साधुः । अयमवनि पततीन्दुर्भूपतिः कौङ्कणानाम् । कौङ्कणं त्वायुधान्तरे । आयुधान्तरम् आयुधविशेषः । ग्रहणं स्वीकृतौ वन्द्यां धीगुणे शब्द आदरे । ग्रहोपरागे प्रत्याये । गृहीतिर्गृह्यते वा ग्रहणम् । गृह्यतेऽनेन वा । स्वीकृतौ यथा—लक्ष्मीकरग्रहणकण्टकितप्रकोष्ठः। वन्द्यां यथा—ग्रहणीकृतरिपुर्लक्ष्मीः । धीगुणे यथा—शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । शब्दे यथा—लोकोपचाराद्ग्रहणसिद्धिः। आदरे यथा—चूडामणौ किं ग्रहणं हरस्य ।।१९०।। प्रत्यायो राजादि ग्राह्यं धनम् । तत्र ग्रहोपरागे च यथा—सा राहुमूर्त्तिरिव

* मु. मू० ग्रहणी तु रुगन्तरे ।



**ग्रहोपरागे प्रत्याये ग्रामणीः* क्षुरमर्दिनि ।**
**प्रधाने भोगिके पत्यौ ग्रामिणी पण्ययोषिति ।।१९१।।**
**ग्रामेय्यां नीलिकायां च गोकर्णः[1] प्रथमान्तरे ।**
**अंगुष्ठानामिकोन्माने मृगेऽश्वे नरसर्पयोः ।।१९२।।**

न ग्रहणं जहाति । ग्रामणीः क्षुरमर्दिनि । प्रधाने भोगिके पत्यौ । ग्रामं नयति ग्रामणीः । ग्रामाग्रान्नियः (२-३-७१) इति णत्वम् । क्षुरमर्दिनि पुंसि । प्रधाने भोगिके पत्यौ च वाच्यलिङ्गः । क्षुरमर्दी नापितः । तत्र यथा—क्व भूपतिपरिस्यन्दी ग्रामणी कलहः क्व च । प्रधाने पत्यौ च यथा—खादति मुहुः पाणीमृगग्रामणीः । भोगो विद्यतेऽस्य भोगिकः । भोगपात्रम् । ग्रामिणी पण्ययोषिति । ग्रामेय्यां नीलिकायां च । ग्रामः पेटकसंवसथो वाऽस्त्यस्य ग्रामिणी । पण्ययोषित् पण्यस्त्री ।।१९१।। ग्रामेयी ग्रामोद्भवा । नीलिका ओषधिः । गोकर्णः प्रमथान्तरे । अङ्गुष्ठानामिकोन्माने मृगेऽश्वे नरसर्पयोः । गौरिव कर्णौ अस्य गोकर्णः । गोकर्णसदृशत्वाद्वा गौर्दृष्टिः कर्णोऽस्येति वा । प्रमथान्तरं गणविशेषः । तत्र यथा—स्मृतगोकर्णनिकेतमीश्वरम् । अत्र गोकर्णगणसेवितत्वात् । गोकर्णो निकेतः । अङ्गुष्ठानामिकोन्माने यथा—प्रदेशन्यादिभिः सार्द्धमङ्गुष्ठे वितते सति । प्रादेशतालगोकर्णवितस्तयोर्यथाक्रमम् । मृगे यथा—गोकर्णतर्णकोऽयं तर्णोत्युपकण्ठकच्छेषु । अश्वतरो वेसरः । तत्र सर्पे च यथा—गोकर्णः कृष्णवर्णोऽयं लष्ठवर्णैर्न वर्ण्यते ।।१९२।। गोकर्णी तु मूर्विकायाम् । मूर्विका ज्याहेतुस्तृणविशेषः । चरणो मूलगोत्रयोः ।

१ मुद्रितेमूले—गोकर्णोऽश्वतरे सर्पे मृगभेदे गणान्तरे ।
२ मु. मू० भ्रमणे भक्षे रासभस्य ध्विनावप ।

गोकर्णी तु मूर्विकायां चरणो मूलगोत्रयोः ।
बह्वृचादौ च पादे च चरणं भ्रमणेऽदने[२] ॥१९३॥
जरणो रुचके हिंगौ जीरके कृष्णजीरके ।
तरुणः *कुक्कुडपुष्पे स्यादेरंडे यूनि नूतने ॥१९४॥
तरणिस्तरणेऽर्केऽशौ कुमार्योषधिनौकयोः ।
यष्ठावाब्धौ दक्षिणस्तु परच्छन्दानुवर्तिनि ॥१९५॥

बह्वृचादौ च पादे च। चरत्यनेन चरणः। चर्यते वा। तृकृश (उ० १८७) इति अणः पुंक्लीबः। मूले यथा—चरणसेकविवर्द्धितवृक्षकाः। गोत्रमन्वयः। वह्वृचादयो वेदशाखाध्ययननिमित्तकव्यपदेशभाजो द्विजन्मानः। तत्र यथा—विशाला ब्रह्मशालेयं चतुश्चरणमण्डिता। पादे यथा—सारं जयत्वाचरणौ कृताशीर्मल्ये नतां निर्वचनं जघान। चरणं भ्रमणेऽदने। चर्यते चरणं। द्वयोर्यथा—बहुतरचरणे नोद्वेजितास्तावकेन। चारित्रेपि। यथा—अद्भुत चरणबोधः प्राणिनो यत्प्रसादादसमसुखनिधानं मोक्षमासादयन्ति ॥१९३॥ जरणो रुचके हिंगौ जीरके कृष्णजिरके। जीर्यतेऽनेन जरणः। चतुर्ष्वर्थेषु रुचकं सौवर्चलं। हिंगू क्लीबे द्वत्यन्ये। तरुणः कुक्कडपुष्पे स्यादेरंडे यूनि नूतने। तरति तरुणः। यम्यजिशक्य (उ० २८८) इति उन। यूनि नूतने च वाच्यलिंगः यूनि यथा—ग्रामतरुणं तरुण्या नवमञ्जुलमंजरीसनाथकरं। नूतने यथा—एषु रे तरुण मारुतधूयमानदावावलीवलयितेषु महीरुहेषु ॥१९४॥ तरणिस्तरणेऽर्केऽशौ कुमार्योषधिनौकयोः। यष्ठावाब्धौ। तरुणं तरति तीर्यतेऽनया वा तरणिः। ऋहसृमृघ्न (उ० ६३८) अणिः।

* कुब्जपुष्पे ।



दक्षेऽपसव्ये सरलेऽप्राचीनेऽप्यथ दक्षिणा ।
दिक्प्रतिष्ठा यज्ञदानं द्रुघणः पशुवेधसोः ॥१९६॥
मुद्गरेऽप्यथ दुर्वर्णं कलधौतकुवर्णयोः ।
दौर्वीणं मृषुपर्णे स्याद्धरितालीरसेऽपि च ॥१९७॥

सप्तस्वर्थेषु अर्केऽशौ यष्ठावाब्धौ च स्त्रीपुंसः। अन्यत्र स्त्रियाम्। तरणे यथा—तरणिकरणिमेणाः कुर्वते फालदानैः। अर्केऽशौ च यथा—तरुणतरणितापवलान्तकौलेयजिह्लातः रभतरनिपातं जीवितं मानवानाम्। कुमारी चासावोषधिश्च कुमार्योषधिः। नौकायां यथा—दारिद्रचोदधि तरणिः सरणि निःश्रेयसस्य नित्यस्य यष्टिः पतितगोरूपोच्छापनो दंडः। यष्ठाब्धिदक्षिणस्तु परच्छन्दानुबर्तिनि। दक्षे अपसव्ये सरलेऽप्राचीनेपि। दक्षते दक्षिणः। द्रुहृवृहि (उ० १९४) इण। पंचस्वर्थेषु वाच्यलिंगः। परछन्दानुवर्त्तिनि ॥१९५॥ दक्षे सरले च यथा—दक्षिणः क्षितिपतिः व्यशश्रणत्। अपसव्ये यथा—हे हस्तदक्षिण मृतस्य शिशोर्द्विजस्य। अप्राचीने दक्षिणदिग्भवे यथा—चाटुकार इव दक्षिणोऽनिलः। अथ दक्षिणा। दिक् प्रतिष्ठा यज्ञदानम्। दिशि यथा—दिक्दक्षिणा गंधवाहं मुखेन। प्रतिष्ठायां यथा—करणीया शुभे लग्ने दक्षिणा हि विचक्षणैः। यज्ञदाने यथा—दक्षिणाः सदसि राजसूयकीः। द्रुघणः पशुवेधसोः। मुद्गरेपि। द्रुर्हन्यतेऽनेन द्रुघणः। व्ययोद्रोः करणे (५–३–३८) इत्यल्। घनादेशश्च। अरीहणादिपाटात् णत्वं। द्रुह्यति बाचि क्वण कुक्वणेत्यणे साधुः। पर्शुमुद्गरयोर्यथा—प्रचक्रे द्रुघणैर्व्रणः। वेधसि बह्माणि यथा—द्रुघणोपि न निद्राति सांद्रदैत्येन्द्रशंकया ॥१९६॥ अथ दुर्वर्णं कलधौतकुवर्णयोः। दुष्टो वर्णोऽस्य दुर्वर्णं कुवर्णे

धरणोऽहिपतौ लोके मान्ये[1] धान्येऽपि दिवाकरे ।
धरणं धारणे मानविशेषे धरणी भुवि[2] ॥१९८॥
घर्षणं रतेऽभिभवे धर्षणी त्वभिसारिका ।
[3]धिषणस्त्रिदशाचार्यः धिषणा तु मनीषिका ॥१९९॥

वाच्यलिंगः । कलधौते यथा—उच्चैर्महारजतराजिविराजिताऽसौ दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा । कुवर्णे यथा—सवर्णं दुर्वर्ण सुतनुतनुकान्त्या तव कृतम् । दौर्वीणि मृषपर्णं स्याद्धरिताली रसेपि च । दुखेन वीर्यते दौर्वीणं भ्रूण वृणेति साधुः । मृषपर्णं ओषधिविशेषः । हरिताली दूर्वा तस्याः रसः ॥१९७॥ धरणोऽहिपतौ लोके माने धान्येपि दिवाकरे । धरति ध्रियतेऽनेन वा धरणः । अहिपतौ यथा—कमठे धरणेन्द्रे च स्वोचितं कर्मकुर्वति । लोको लोकविशेषः धरणं धारणे मानविशेषे । धृतिधरणं धारणे यथा—दुखाकुलस्य मनसो धरणं न शक्यम् । मानविशेषे यथा—अयं धारयते मूर्ध्ना पित्रव्यधरणद्वयीम् । धरणी भुवि यथा—धरणीधरकन्दरान्तरस्थाम् इकारान्तोपि यथा—विलसितमनुकुर्वती पुरस्ताद्धरणि रुहाधिरोहो वधूर्लतायाः ॥१९८॥ धर्षणं रतेऽभिभवे । घृष्यतेऽस्मिन् घृष्टिर्वा घर्षणं । द्वयोर्यथा—अविरत-घर्षणरसिकः खल इव वेश्याजनो जयति । धर्षणी त्वभिसारिका धृणोति धर्षणी रम्यादित्वादनटि टित्वाङ्खीः । यथा—वर्षत्यपि घने याति रसोत्कर्षेण धर्षणी । धिषणस्त्रिदशाचार्यः । धृष्णोति धिषणः धृषि वहेरिश्चोपान्त्यस्येत्यणः । यथा—सौखप्रसुप्ति-कविधौ धिषणो नदीष्णः । धिषणा तु मनोषिका । मनीषिका

१ प्र० स्तने । २ भुवि । धारणः सलिले स्वर्गे परमेष्ठिनि धर्मणः ॥ सर्वभेदे वृक्षभेदे० ३ धारिणी नाडिलादिभिः। धारणा स्यात्त योगाङ्गे वारणं ग्रहहे मतम्॥



निर्याणं निर्गमे मोक्षगजापांगप्रदेशयोः ।
निर्वाणं मोक्षनिर्वृत्योर्विघाते करिमज्जने ॥२००॥
निर्माणं सारनिर्मित्योः कर्मभेदे समंजसे ।
निःश्रेणिरधिरोहिण्यां खर्जूरी पादपेऽपि च ॥२०१॥

बुद्धिस्तत्र यथा—तीक्ष्णा हि मनीषिणां धिषणा ॥१९९॥ निर्याणं निर्गमे मोक्षगजापांगप्रदेशयोः निर्यायते निर्याणं निर्याति मदोऽनेन वा । निर्गमे यथा—ततो नगरनिर्याणे तयोरासीत्समागमः । मोक्षे यथा—सर्वसंगपरित्यागान्निर्याणं स यियासति । गजापांग-प्रदेशे यथा—निर्याणं निर्पदसृजं चलितं निषादी । निर्वाणं मोक्ष—निर्वृत्यो—विघाते करिमज्जने । निर्वात्यस्मिन् करणाधारेऽनट् (५/३/१२९ निर्वाति स्म वा । निर्वाणमवाते इति तस्य नत्वे साधुः । विघाते वाच्यलिंगः । निर्वृत्तिः सुखमात्रं तत्र मोक्षे च यथा—प्रियादर्शनमेवास्तु किमन्यैः दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा । विघाते यथा—निर्वाणवैर-दहनाः प्रशमादरीणां । करिमज्जने यथा—निर्वाणमापि सरसीषु गजाधिरूढपेन ॥२००॥ निर्माणं सारनिर्मित्योः कर्मभेदे समंजसे । निर्मीयते निर्माणं । सारस्थिरोऽर्थः । निर्मितौ यथा—जननयननिर्माणमफलं । कर्मभिदो विचित्रावयवरचनाहेतुर्नाम कर्मभेदः । तत्र यथा—निर्माणेन विनिर्मिता तनुरियम् । समंजसं न्यायः । निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेपि च । निर्गता श्रेणिः सोपानपंक्तिरत्र निःश्रेणिः निष्क्रान्ता श्रेणेस्तरुसमूहाद्वा उच्चविटपत्वात् । स्त्रियां अधिरोहिण्यां यथा—अधिरोढुं गुणश्रेणीं निःश्रेणीमुक्तिवेश्मनः ॥२०१॥ प्रघणोऽलिंदके ताम्र-कलसे लोहमुद्गरे । प्रहण्यते प्रघणः । प्रघणप्रघाणौ गृहांशे

**प्रघणोऽलिंदके ताम्रकलसे लोहमुद्‌गरे ।**
**प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे ।।२०२।।**
**आयते च प्रमाणन्तु मर्यादासत्यवादिनोः ।**
**प्रमातर्येकतेयत्तानित्येषु हेतुशास्त्रयोः ।।२०३।।**
**पत्तोर्णं धौतकौशेये स्यात्पत्रोर्णस्तु शोणके* ।**
**पक्षिणी पूर्णिमाखग्योः शाकिनी रात्रिभेदयोः ।।२०४।।**

इत्यलि (५–३–३५) साधुः । प्रघणति वा अलिंदके द्वाराधोदारुणि यथा–प्रघणे प्रगुणीचक्रुः कर्पूरस्वस्तिकान् स्त्रियः । प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे । आयत्ते च । प्रवन्तेऽत्र प्रवणः । प्रवते वा । पंचस्वर्थेषु क्षणे पुंसि । चतुष्पथे पुंक्लीबः । अन्यत्र वाच्यलिंगः । क्षणोऽवसरः । प्रह्वे आसक्ते यथा–परोपकारप्रवणेन चेतसा । क्रमनिम्ने यथा–प्रागुदक्प्रवणा भूमिः श्लक्ष्णा योगे प्रशस्यते । चतुष्पथे यथा–प्रवणे चरन्ति भूताः ।।२०२।। आयत्ते यथा–प्रायेण योषित्प्रवणा हि कामिनः । प्रमाणन्तु मर्यादासत्यवादिनोः प्रमातर्येकतेयत्तानित्येषु हेतुशास्त्रयोः । प्रमीयतेऽनेन प्रमितिः । प्रमिमीते वा प्रमाणम् । मर्यादा अवधिः । तत्र यथा–राजानं मां च प्रमाणं कृत्वा यतः यस्याकुशलं पश्यसीति । सत्यवादिनि यथा–वाणी पमाणस्य मुनेः प्रमाणं । प्रमातरि यथा–सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः । एकतायां यथा–परस्परप्रमाणाः भ्रातरः । इयत्ता परिच्छेदः । तत्र यथा–कियत्प्रमाणमुदकम् । नित्ये यथा–नभः प्रमाणं गुणिनो गृणन्ति । हेतौ यथा–धूमः प्रमाणं ज्वलनावबोधे । शास्त्रे यथा–पदवाक्यप्रमाणानां पारंयात-

* शोणकद्रुमे ।



**प्रवेणिर्वेणिकुथयोः पुराणं प्रत्नशास्त्रयोः ।**
**पुराणः षोडशपणे पूरणं वानतन्तुषु ।।२०५।।**
**पूरके पिष्टभेदे च पूरणी शाल्मलिद्रुमे ।**
**प्रोक्षणं सेकवधयोः भरणं वेतने भृतौ ।।२०६।।**

स्य धीमतः । पत्तोर्णं धौतकौशेये स्यात् । प्राप्ता ऊर्णाऽनेन पत्तोर्णं पृषोदरादित्वात् । यथा–पत्तोर्णसावर्ण्यजुषःकरास्ते । पत्रोर्णस्तु शोणके । शोणको रलुकवृक्षः । पक्षिणी पूर्णिमाखग्योः शाकिनीरात्रिभेदयोः । पक्षावस्याः स्तः पक्षिणी । पूर्णिमायां यथा–सदृक्षः पक्षिणींदुना । खग्यां यथा–सा ययावन्तरिक्षेण पक्षिणी व क्षणादपि । शाकिनीभेदः शाकिनीविशेषः । रात्रिभेदे आगामिवर्तमानदिनयुक्ते यथा–अमावास्यां पक्षिणीं नाधीते ।।२०४।। प्रवेणिर्वेणिकुथयोः । प्रवेति प्रवेणिः । कावावी (उ० ६३४) इति णिः । स्त्रियां वेणिः कबरी । कुथो वर्णकंवलः । द्वयोर्यथा–प्रवेणीमदनस्येव प्रवेणी कुसुमांचिता । पुराणं प्रत्नशास्त्रयोः पुरा भवं पुराणं । प्रत्ने पुरातने वाच्यलिंगः तत्र यथा–निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः । शास्त्रं पंचलक्षणं । यथा–सर्गश्च प्रतिसर्गश्च, वंशो मन्वन्तराणि च । वंशानुवंशचरितं पुराणं पंचलक्षणम् । पुराणः षोडशपणे । यदाह–षोडशपणः पुराणः पणो भवेत्काकिणी चतुष्केण । पूरणं वानतंतुषु । पूरके पिष्टभेदे च । पूर्यतेऽनेन पूरयति वा पूरणं ।।२०५।। पूरके वाच्यलिंगः । तत्र यथा–सहस्रपूरणः कश्चिल्लूनमूर्द्धासिना द्विषः । पिष्टभेदे यथा–घृतपूरैः सकर्पूरैः पूरणैश्च स पूरितः । पूरणी शाल्मलिद्रुमे । स्त्रियां । टित्वाड्डी । प्रोक्षणं सेकवधयोः । प्रोक्ष्यते प्रोक्षणं । सेके

**भरणी शोणके भे च भ्रमणी स्यादधीशितुः ।**
**क्रीडादौ कारुंडिकायां भीषणं सल्लकीरसे ।।२०७।।**
**भीषणो दारुणेऽर्गाटे मत्कुणोऽश्मश्रुपूरुषे ।**
**उद्दंशो नालिकेरे च निर्विषाणगजेऽपि च ।।२०८।।**
**मसृणाऽकठिने स्निग्धे मसृणो स्यादतस्यपि ।**
**मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि ।।२०९।।**

यथा-पृष्टप्रोक्षणलब्धशुद्धिरधुना । वधो हिंसाऽर्थाद्यज्ञे । तत्र यथा-प्राणप्रोक्षणके वनेत्र विजने किं भीरु बंभ्रम्यसे । भरणं वेतने भृतौ । भ्रियतेऽनेन भृतिर्वा बिभर्ति वा भरणं वेतनं मूल्यं । भृतिः पोषणमात्रं द्वयोर्यथा-मूर्खशिष्योपदेशेन दुष्टस्त्री भरणेन च ।।२०६।। भरणी शोणके भे च । शोणको रलुकवृक्षः । भे नक्षत्रे यथा-बुधे धनिष्ठा भरणी अश्विनी मूलरेवती । भ्रमणी स्यादधीशितुः क्रीडादौ कारुंडिकायां । भ्रम्यतेऽस्यां भ्रमणी । अधीशितुः राजादेः । क्रीडादौ यथा-भ्रमण्यां प्रययौ (नृपः)। कारुंडिका ओषधिः । भीषणं सल्लकीरसे भीषयति भीषणं ।।२०७।। भीषणो दारुणेऽर्गाटे । दारुणे वाच्यलिंगः । तत्र यथा-स रावणो नाम निकामभीषणं । बभूव रक्षः क्षतरक्षणं दिवः । अर्गाटोऽपामार्गः । मत्कुणोऽश्मश्रुपूरुषे उद्दंशे नालिकेरे च निर्विषाणगजेऽपि च । माद्यति मत्कुणः । भ्रूणंतृणेति (उ० १८६) साधुः । अश्मश्रुपूरुषे नालिकेरे च यथा-स्त्रैणं क्रीडति मत्कुणैः । उद्दंशे क्षुद्रजन्तौ यथा-मत्कुणाविव पुरः परिप्लवौ सिन्धुनाथशयने निषेदुषः । निर्विषाणगजे यथा-दशन-व्यसनादीयुर्मत्कुणत्वं मतंगजः ।।२०८।। मसृणोऽकठिने स्निग्धे । मस्यति परिणमते मसृणः । भ्रूणतृणेति (उ० १८६) साधुः ।



**यन्त्रणं बन्धने त्राणे नियमे रमणं पुनः ।**
**पटोलमूले जघने रमणो रासभे प्रिये ।।२१०।।**
**रोषणो रोषणे हेमघर्षे पारद ऊषरे ।**
**रोहिणी सोमवल्के भे कंठरोगोभयोर्गवि ।।२११।।**

गुणे पुंसि । तद्वति वाच्यलिंगः । अकठिने यथा-मसृणचरणपातं गम्यतां भूः सदर्भा । स्निग्धे यथा-मसृणघुसृणपंकैरंकिता पाणि-रस्याः । मसृणास्यादतस्यपि । अतसि उमा । मार्गणं याचनेऽन्वेषे । मार्ग्यते मार्गणं । याचने यथा-द्रविणमार्गण-लंपटकुट्टनी । अन्वेषे यथा-वैदेही मार्गणं रामः सकामः कुरुते वने । मार्गणस्तु शरेऽर्थिनि । मार्गति मार्गणः । अर्थिनि वाच्यलिंगः । द्वयोर्यथा-कृतपुंखतया लेमे लक्षमप्याशु मार्गणैः ।।२०९।। यन्त्रणं बंधने त्राणे नियमे । यंत्र्यते यंत्रणं । त्रिष्वपि यथा-कुर्यादिंद्रिययन्त्रणं । रमणं पुनः । पटोलमूले जघने । रम्यतेऽनेन रमणं । पटोलमूलमौषधं । जघने यथा-रमणालवालनिर्गतरोमावलिवल्लरीव संसिक्ता । रमणो रासभे प्रिये । रमते रमणः । रम्यादित्वादनट् । प्रिये यथा-चाटुचाक्रुतकं संभ्रममासाकार्मणत्वमगमद्रमणेषु ।।२१०।। रोषाणो रोषणे हेमघर्षे पारद ऊषरे रुष्यति रोषाणः । कल्याण पर्याणा (उ० १९३) इति साधुः । रोषणे वाच्यलिंगः । तत्र यथा-रोपाणस्तं विषाणाभ्यां विव्याध व्यालकुंजरः । हेमघर्षः शोणः । पारदो रसः । ऊषरमिरिणं । रोहिणी सोमवल्के भे कंठरोगो-मयोर्गवि । लोहिताकटुरोहिण्योः । रोहति अवश्यं रोहिणी णित्वावश्यकेति णिन् । रोहित शब्दाद्वाश्येति ङीस्तस्य नत्वं च । सप्तस्वर्थेषु । सोमवल्कः श्रीपर्णी । भे नक्षत्रे यथा-

**लोहिताकटुरोहिण्योर्लवणो राक्षसे रसे ।**
**अस्थिभेदे लवणात्त्विट् लक्षणं नामचिह्नयोः ॥२१२॥**
**लक्ष्मणं च लक्षणस्तु सौमित्रो लक्ष्मणो यथा ।**
**लक्ष्मणः श्रीयुते लक्ष्मणौषधौ सारसस्त्रियाम् ॥२१३॥**

हे रोहिणि त्वमसि रात्रिचरस्य भार्या । कंठरोगो गलांकुरः । उमा गौरी तत्र यथा–रोहिणीरहितः शिवः । गवि यथा–वर्द्धिष्णुधारा ध्वनिं रोहिणीः पयश्चिरं निदध्यौ दुहतः स गोदुहः ॥२११॥ लोहितायां रक्तायां यथा–तापाय रोहिणी तडित् । कटुरोहिणी ओषधिः । लवणो राक्षसे रसे । अस्थिभेदे । लुनाति लवणः । नद्यादित्वात् अनो णत्वं च । राक्षसे यथा–दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति । ·रसे यथा–स्वक्षो लवणभोजी स्यात् । अस्थिभेदो भालकर्णातरास्थि । तत्र यथा–शृणाति लवणाधातः । लवणात्त्विट् । त्विट् दीप्ति लक्षणं नामचिह्नयोः । लक्ष्मणं च । लक्ष्यतेऽनेन लक्षणं । लक्षयति वा । लक्ष्यतेऽनेन लक्ष्मणं । चिक्कण कुक्कण (उ० १९०) इति साधुः । लक्षणलक्ष्मणशब्दौ नामचिह्नयोः वर्त्तेते इत्यर्थः । नामनि यथा–ककुस्थ इत्याहित लक्षणोऽभूत् । लक्ष्मणे न स लक्ष्मणः । चिह्ने यथा–उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः । आज्ञैश्वर्यं च सत्वं च विदुक्ष्मापस्य लक्ष्मणं ॥२१२॥ लक्षणं शास्त्रेऽपि । लक्षणस्तु सौमित्रो लक्ष्मणो यथा–सौमित्रो रामानुजे यथा–उच्चरणलब्धकीर्त्तेराज्ञारहितस्य लक्षणयुतस्य । रामस्य वनं शरणं जितपरकलभस्य शरभस्य । सुग्रीवस्य श्रियं दृष्ट्वा विनयं लक्ष्मणस्य च । विभीषणस्य दोलेव मतिरायाति याति च । लक्ष्मणः श्रीयुते । लक्ष्मी-



**वरुणोऽर्केऽप्पतौ वृक्षे वरणो वरुणद्रुमे ।**
**प्राकारे वरणं वृत्यां वारणः स्यान्मतंगजे ॥२१४॥**
**वारणं तु प्रतिषेधे ब्राह्मणं विप्रसंहतौ ।**
**वेदे च ब्राह्मणो विप्रे *वारुणी पश्चिमासुरा ॥२१५॥**

रस्त्यस्य लक्ष्मणः । लक्ष्म्या अनः वाच्यलिंगः । पुण्यभागी स लक्ष्मणः । लक्ष्मणौषधौ सारसस्त्रियां । सारसस्त्रियां यथा–वाल्मीकेररहितरामलक्ष्मणानां साहश्यं दधति गिरां महासरस्य ॥२१३॥ वरुणोऽर्केऽप्पतौ वृक्षे । वृणोति वरुणः । दृक्वृं दारिभ्य उणः । अर्के यथा–उदेति वरुणोरुणः । अप्पतौ पश्चिमापतौ यथा–अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदनुषारकरः । वृक्षो वृक्षभेदः । वरणो वरुणद्रुमे । प्राकारे । वृणोति वरणः। तृ कृ श्रृ इत्यणः । द्वयोर्यथा–प्रोत्तुंगवरणावृतः । वरणं वृत्यां वृतिः स्वीकारः । तत्र यथा–कन्या वरणमिच्छति स्वजातावेव वाणिजाः । वारणः स्यान्मतंगजे । वारयति वारणः ॥२१४॥ वारणं तु प्रतिषेधे । वार्यते वारणं । मतंगजे प्रतिषेधे च यथा–न भवति बिसतन्तुर्वारिजं वारणानां । ब्राह्मणं विप्रसंहतौ । वेदे च । ब्राह्मणानां समूहो ब्राह्मणं । ब्राह्मणमाणवेतियवाधकः श्वादिभ्योऽञ् । ब्रह्मणा प्रोक्तं वा तेन प्रोक्त इत्यण् । वेदेऽन् । ब्राह्मणमत्रैवेति निर्देशाद्ब्रह्मण इत्यंत्यस्वरादिलोपो न भवति । विप्रसंहतौ ·यथा–ब्राह्मणं ब्रह्मशालायामजिह्मध्वनि गायति । वेदे वेदैकदेशे यथा–पश्यन्ते याज्ञवल्कानि ब्राह्मणैर्ब्राह्मणानि तैः । ब्राह्मणो विप्रे । ब्रह्मणोऽपत्यं ब्राह्मणः । ङसोऽपत्ये इत्यण् यथा–गंधेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।

* ब्राह्मणी वाडवस्त्रियां । स्पृक्कायां फञ्जिकायां च । वारुणी०

गंडदूर्वा विषाणं तु शृंगे कोलेभदंतयोः ।
विषाणी मेषशृंग्यां स्यात् विपणिः पण्यहट्टयोः ॥२१६॥
पण्यवीथ्यां श्रमणस्तु निर्ग्रंथे निंद्यजीविनि ।
श्रमणा सुलता मांसी मुण्डीरी च सुदर्शना ॥२१७॥

फंजिकास्पृक्कयोस्तु ब्राह्मणीति प्रयोक्तव्यम् । वारुणी पश्चिमा सुरा । गंडदूर्वा । वरुणस्येयं वारुणी । पश्चिमासुरयोर्यथा—स वारुणीसक्तिमुपेत्य साम्प्रतं विहीनकान्तिः पतितो द्विजेश्वरः ॥२१५॥ गंडदूर्वा प्रधानदूर्वा विषाणं तु शृंगे कोलेभदंतयोः । वेवेष्टि विषाणं । कृपिवृषि वृषीत्याणक् । त्रिलिंगः । शृंगे यथा—परेतभर्त्तुर्महिषोऽमुना धनुर्विधातुमुत्खातविषाणमंडलः । कोलदंते यथा—कोला विषाणतटघट्टितपल्वलान्तः । इभदन्ते यथा—न जातु वैनायकमेकमुद्धृतं विषाणमद्यापि पुनः प्ररोहति । विषाणी मेषशृंग्यां स्यात् । मेषशृंगी ओषधिः । विपणिः पण्यहट्टयोः । पण्यवीथ्यां विपण्यते विपणायंत्यस्मिन् वा विपणिः । पदिपठीति इः । स्त्रियां । माघस्तु पण्यवीथ्यां पुंस्याह । त्रिष्वपि यथा—अगण्यपण्यपूर्णापणं विपणिनो विपणिं विभेजुः । अत्र विपणिः । पण्यं हट्टौ वा विद्यते येषां ते विपणिनः । शिखादित्वादिन् । विपणिं पण्यवीथिकामित्यर्थः । श्रमणस्तु निर्ग्रंथे निंद्यजीविनि । श्राम्यति श्रमणः । नद्यादित्वादनः । निर्ग्रंथे यथा—क्षमाप्रधानाः श्रमणाः भवन्ति । निंद्यजीविनी वाच्यलिंगः । तत्र यथा—विश्रामः श्रमणे कुतः । श्रवणो नक्षत्रभेदे । श्रूयते श्रवणः । तृ कृ श्रृ इत्यणः । स्त्रीपुंसः। यथा—मूलेऽर्कः श्रवणे चन्द्रः । श्रवण श्रवसि श्रुतौ । श्रूयतेऽनेन श्रुतिर्वा श्रवणं । श्रवसि कर्णे पुंक्लीबः । श्रुतौ श्रवणमात्रे



श्रवणो नक्षत्रभेदे श्रवणं श्रवसि श्रुतौ ।
शरणं रक्षणे गेहे वधरक्षकयोरपि ॥२१८॥
*श्रीपर्णस्त्वग्निमंथेऽब्जे श्रीपर्णी शाल्मलौ हठे ।
संकीर्णो निचिताशुद्धौ सरणिः श्रेणिमार्गयोः ॥२१९॥
सारणः स्यादतीसारे दशकन्धरमंत्रिणि ।
सिङ्घाणन्तु घ्राणमलेऽयः किट्टे काचभाजने ॥२२०॥

क्लीबे । श्रवसि यथा—आलोचनान्तत् श्रवणौ वितत्य । श्रुतौ यथा—शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । शरणं रक्षणे गेहे वधरक्षकयोरपि । शृणोत्यपायं शरणं । तृ कृ शृ इत्यणः । शीर्यते वा । श्रियंति तदिति नैरुक्ताः । रक्षणे यथा—तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान् द्विषः। गेहे यथा—एताभिरग्निशरणेषु सधर्मिणीभिः। वधे यथा—विद्विषां शरणं शरैः। रक्षके यथा—त्वमेव शरणं मम ॥२१८॥ श्रीपर्णमग्निमंथेऽब्जे । श्रीः पर्णे यस्य श्रीपर्णं । अग्निमंथोऽरणिः। अब्जे यथा—श्रीपर्णप्रर्णं विदधाति कर्णे । श्रीपर्णी शाल्मलौ हठे । शाल्मलिर्वृक्षभेदः। हठो जलजस्तृणविशेषः। संकीर्णो निचिताशुद्धौ । सम्यक्कीर्णः संकीर्णः। संकीर्यते मिश्रीक्रियते स्म वाच्यलिंगः। निचिते यथा—सकीर्णकीचकवनस्खलितैकवालविच्छेदकातरधियश्चलितुं चमर्यः । अशुद्धे यथा—संकीर्णजातिर्गज एष याति । सरणिः श्रेणिमार्गयोः। सरन्त्यस्यामिति सरणिः । कृ हृ सृ इत्यणिः। स्त्रियां । श्रेणौ पंक्तौ यथा—सरणिः पिपीलिकानां निर्याता वर्षसूचनं कुरुते । मार्गे यथा—उपपरिसरं गोदावर्याः परित्यजताध्वगाः। सरणिमपरोमार्गस्तावद्भवद्भिरिहेक्ष्यताम् ॥२१९॥ सारणः स्यादतीसारे दशकन्ध-

१३ *श्रावणो मासि पाखण्डे दध्यात्यां श्रावणा मता । श्रीपर्ण०।

सुषेणो विष्णुसुग्रीववैद्ययोः करमर्दके ॥
सुवर्णं कांचने कर्षे सुवर्णालौ मषान्तरे ॥२२१॥
कृष्णागुरुणि विस्ते च सुपर्णः कृतमालके ॥
गरुडे स्वर्णचूडे च सुपर्णा विनताब्जिनी ॥२२२॥
हरणं तु हृतौ दोष्णि यौतकादिधनेपि च ॥
हरिणौ पांडुसारंगौ हरिणी चारुयोषिति ॥२२३॥

रमंत्रिणि। सारयति सारणः। अतीसारे यथा–तंत्रं सारणदारणं। रावणमंत्रिणि यथा-मंत्रिणौ शुकसारणौ। सिंहाणं तु घ्राणमलेऽयः किट्टे काचभाजने। सिंघ्यते सह्यते वां सिं(घा)हाणं। कल्याणप्रर्याणादय (उ० १८३) इति साधुः ॥२२०॥ सुषेणो विष्णुसुग्रीववैद्ययोः। करमर्दके। शोभना सेनाऽस्य सुषेणः। एत्यक इति षत्वं। विष्णौ यथा–सुषेणसेनाप्रसरेण भेदिनी। सुग्रीवस्य वैद्यः सुग्रीववैद्यः। करमर्दको वृक्षविशेषः। सुवर्णं कांचने कर्षे सुवर्णालौ मषान्तरे। कृष्णागुरुणि विस्ते च। शोभनो वर्णोऽस्य सुवर्णं। सुष्टु वर्ण्यते वा। पुंक्लीबः। कांचने यथा–सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। कर्षेऽर्थान् कांचनस्य यथा–माषोदशार्द्धगुंजः। षोडशमाषो निगद्यते कर्षः। स सुवर्णस्य सुवर्णः। सुवर्णस्यालुः करकपात्रिका सुवर्णालुः। मषान्तरं यज्ञभेदः ॥२२१॥ कृष्णागुरुः काकतुंडः। विस्तः षष्ठिः पलशतानि। सुपर्णः कृतमालके। गरुडे स्वर्णचूडे च। शोभनानि पर्णान्यस्य सुपर्णः। कृतमाल आरग्वधः। गरुडे यथा–निजकेतुशिरःश्रितः सुपर्णादपतन्नयुतानि पक्षिराजं। स्वर्णचूडः पक्षिविशेषः। सुपर्णा विनताब्जिनी। विनता गरुडमाता। तत्र यथा–सौपर्णेयप्रकीर्णैर्विषधरनिकरैः। अब्जिनी पद्मिनी ॥२२२॥ हरणं तु हृतौ दोष्णि यौतकादिधनेपि



सुवर्णप्रतिमायां च हरिता वृत्तभेदयोः ॥
हर्षणस्तु श्राद्धदेवे हर्षके योगरुग्भिदोः ॥२२४॥
हरेणुः कुलयोषायां रेणुकायां सतीनके ॥
हिरणं हिरण्यमिव वराटे हेम्नि रेतसि ॥२२५॥

च। ह्रियते हरणं। ह्रियतेऽनेन वा। हृतौ यथा–सीताहरणकारणात्। दोर्बाहुः यौतकं वधूवरयोर्देयं तत्र यथा–इच्छानुरूपं हरिणी कृतश्रीः प्रास्थापयद्राधवमन्वगाच्च। हरिणौ पांडुसारंगौ। हरति हरिणः। हृ दृ वृ हि दक्षिभ्य इणः। पांडौ गुणे पुंसि। तद्वति वाच्यलिङ्गः। तत्र यथा–हरिणवदनकान्त्या शल्यमन्यर्व्यनक्ति। सारंगे मृगे यथा–अरण्ये मां त्यक्त्वा हरिण हरिणाक्षी क्व नु गता। हरिणी चारुयोषिति। सुवर्णप्रतिमायां च हरिता वृत्तभेदयोः। हरितशब्दात् श्येतैतहरितेतिङ्चान्तस्य नत्वे च हरिणी। चारुः प्रधानयोषित् चारुयोषित्। वात्स्यायनप्रसिद्धा ॥२२३॥ सुवर्णप्रतिमायां यथा–हरिणीभिः श्रितस्तंभा भान्ति प्रासादमंडपाः। हरिता नीला तत्र यथा–सन्मनोहारिणी व्योम्नि हरिणी शुकधोरणी। वृत्तभेदे यथा–भवति हरिणीन्सौम्रौम्लौ गोरसो दधिसप्तकैः। हर्षणस्तु श्राद्धदेवे हर्षके योगरुग्भिदोः। हृष्यति हर्षणः। हर्षके वाच्यलिङ्गः। श्राद्धदेवो यमः। हर्षके यथा–करेणुर्मदहर्षणः। योगभिदि यथा–व्याघातो हर्षणस्तथा। रुग्भिद् अक्षिरोगविशेषः ॥२२४॥ हरेणुः कुलयोषायां रेणुकायां सतीनके। हरति हरेणुः। कृ हृ भू इत्येणुः। सतीनके पुंसि। शेषयोः स्त्रियां। कुलयोषा कुलस्त्री। रेणुका गंधद्रव्यं सतीनकस्त्रिपुटधान्यं। हिरणं हिरण्यमिव वराटे हेम्नि रेतसि। हरति हिरणं। चिक्कण

अमृतं यज्ञशेषेम्बुसुधामोक्षेष्वयाचिते ॥
अन्नकांचनयोर्जग्धौ खे स्वादुनि रसायने ॥२२६॥
घृते हृद्ये गोरसे चामृतं धन्वन्तरौ सुरे ॥
अमृतामलकीपथ्यागुडूचीमागधीषु च ॥२२७॥
अनृतं कर्षणेऽलीके चाक्षतः स्यादहिंसिते ॥
षंडे लाजेष्वर्दितं तु वातव्याधौ हतेऽर्थिते ॥२२८॥

कुक्कण (उ० १९०) साधुः। हरति हिरण्यं। हिरण्यवर्जन्यादय (उ० ३८०) इति साधुः। हिरणं क्लीबे। हिरण्यं हेम्नि पुंक्लीबेऽन्यत्र क्लीबे। त्रिष्वपि हिरणं यथा–हिरणं कारणं श्रियः। वराटे हेम्नि च हिरण्यं यथा–हिरण्यमेवार्जय निष्फलाः कलाः। हिरण्यमक्षय्याकुप्यमानभेदद्रव्येष्वपि ॥२२५॥ • अथ तान्ताः। अमृतं यज्ञशेषेऽम्बुसुधामोक्षेष्वयाचिते। अन्नकांचनयोर्जग्धौ खे स्वादुनि रसायने घृते हृद्ये गोरसे च। नास्ति मृतमस्मादस्मिन्वा अमृतं। न मृतं याचितं इति वा। चतुर्दशस्वर्थेषु क्लीबे। यज्ञशेषे यथा–नित्यं चामृतभोजनः। अंबुनि यथा–अमृतमिति वचसि सत्यपि विषमिति हि किमुच्यते वारि। सुधायां यथा–देवासुरैरमृतमंबुनिधिर्ममन्थे। मोक्षे यथा–सेव्यतामक्षयो धीराः सश्रिये चामृताय च। अयाचिते यथा–यन्मनुः। ऋतुमुंच्छशिलंक्षेयममृतं स्यादयाचितं। शेषेषु यथा–अमृते कस्य न प्रोतिः ॥२२६॥ अमृतो धन्वन्तरौ सुरे। द्वयोर्यथा–अमृताय नमस्तस्मै। अमृतामलकीपथ्यागुडूचीमागधीषु च। सर्वा अप्योषधयः। गुडूच्यां यथा–क्षुद्रामृतानागरपुष्कराख्यैः ॥२२७॥ अनृतं कर्षणेऽलीके च। न ऋतं अनृतं। पापिष्टत्वात्। कर्षणं कृषिः। अलीकमसत्यं। तद्वति वाच्यलिङ्गः। द्वयोर्यथा–अनृते वर्तते पापं।



अजितस्तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते ।
अच्युतो द्वादशस्वर्गे केशवाभ्रष्टयोरपि ॥२२९॥
अव्यक्तं प्रकृतावात्मन्यव्यक्तोऽस्फुटमूर्खयोः ।
अनन्तं खे निरवधावनन्तस्तीर्थकृद्भिदि ॥२३०॥

अक्षतं स्यादहिंसिते। षंढे लाजेषु। न क्षण्यते अक्षतं। अहिंसिते वाच्यलिंगः। लाजेषु पुंक्लीबः। लाजे पुंसि। बहुवचनान्त एव। अहिंसिति यथा–अक्षतः स्मरशरासनबाणैः। षंडस्तृतीया प्रकृतिः। लाजेषु मांगल्यतंडुलेषु। यथा–सुदक्षिणा साक्षतपात्रहस्ता। अर्दितं तु वातव्याधौ हतेऽर्थिते। अर्घते स्म अर्दितं। हतार्थितयोर्वाच्यलिंगः। हते यथा–हृदये दिग्धशरैरिवार्दितः अर्थिते यथा–कदर्यकुर्दतेऽर्दितः ॥२२८॥ अजितस्तीर्थकृद्भेदे। बुद्धे विष्णावनिर्जिते। न जीयतेऽजितः। अनिर्जिते वाच्यलिंगः। तीर्थकृद्भेदे द्वितीयतीर्थकरे यथा–श्रीमंतमजितं देवं सर्वतः प्रणिदध्महे। शेषेषु यथा–जीयादजितः परैरजितः। अच्युतो द्वादशस्वर्गे केशवाभ्रष्टयोरपि। न च्यवतेऽच्युतः। अभ्रष्टे वाच्यलिंगः। द्वादशस्वर्गे यथा-अच्युतेन्द्रश्च्युतो दिवः। केशवे यथा–शुचिस्मितां वाचमवोचदच्युतः। अभ्रष्टे यथा–अच्युतेषु सलक्ष्यतः ॥२२९॥ अव्यक्तं प्रकृतावात्मनि। न व्यक्तं अव्यक्तं। प्रकृतिः सांख्योक्ता। तत्र यथा–सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तं। आत्मनि परात्मनि यथा–अव्यक्तादण्डमभवत्। अव्यक्तोऽस्फुटमूर्खयोः। वाच्यलिंगः। अस्फुटे यथा–अव्यक्तमित्यभिहिते मनुजेश्वरेण। मूर्खे यथा–न वक्तियुक्तमव्यक्तः। अनंतं खे निरवधौ। नास्त्यंतोऽस्य अनंतं। निरवधौ वाच्यलिंगः। खे आकाशे यथा–अनन्तमारोहति तेजसा रविः। निरवधौ

विष्णौ शेषेऽप्यनन्ता गुडूचीभूर्दुरालभा ।
विशल्या लांगलीदूर्वा शारिबाहैमवत्यपि ।।२३१।।
अस्वंतमशुभे क्षेत्रे चुल्यामनवधौ मृतौ ।
अमतिः काले चंडे चाप्यंकतिर्वह्निवेधसोः ।।२३२।।
अग्निहोत्रिण्यगस्तिर्द्रुमुन्योः स्याददितिर्भुवि ।
देवमातरि पार्वत्यामंहतिस्त्यागरोगयोः ।।२३३।।

यथा—अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता । अनन्तस्तीर्थकृद्धिदि । विष्णौ शेषेऽपि । तीर्थकृद्भेदे चर्तुदशे तीर्थकरे यथा—नमः श्रीमदनंताय वीतरागाय तायिने ।।२३०।। विष्णौ यथा—लक्ष्मीरनन्तस्य निबद्धभावा । शेषे नागराजे यथा अनन्तभोगीन्द्रफणामणिप्रभाप्रवृद्धसक्तौ शुभकान्ति वो हरेः । अनाशेऽपि मंख । यथा—अनन्तो जगदन्तकः । अनन्ता गुडूची भूर्दुरालभा । विशल्या लांगली दूर्वा शारिवा हैमवत्यपि । भूर्भूमिः। तत्र यथा—सप्तसागरपर्यन्तामनंतां भ्राम्यता भया । शेषा ओषधयः ।।२३१।। अस्वंतमशुभे क्षेत्रे चुल्यामनवधौ मृतौ । न विद्यते शोभनोऽतोऽस्य अस्वंतं । अशुभे धर्ममात्रे क्लीबे तद्वति अनवधौ च वाच्यलिंगः। पंचस्वपि यथा—अस्वन्तं स्वान्तदुःखदं । अमतिः काले चंडे चापि अमत्यमतिः। स्वल्पमित्यति । काले यमे पुंसि । चंडे वाच्यलिंगः। अंकतिर्वह्निवेधसोः । अग्निहोत्रिणि । अंच्यते अंकतिः। अंचेः कचवेत्यतिः । पुंसि ।।२३२।। अगस्तिर्द्रुमुन्योः स्यात् । अगति अगस्ति । अगिवलीत्यस्तिक् (उ० ६६०) पुंसि । द्रुर्वृक्षविशेषः। तत्र यथा—प्रयाणं भूभुजां युक्तमगस्ति कुसुमोद्गमे । मुनौ यथा—समे पीतं च भुक्तं च अगस्तिर्जरयिष्यति । अदितिर्भुवि । देवमातरि पार्वत्यां । न ददाति अदितिः । मञ्गोडागोडितिः ।



आपातः पाततत्कालेऽप्याद्दतः सादरेऽर्चिते ।
आख्यातं भाषितेस्त्यादावाघ्राते ग्रस्तशिंघिते ।।२३४।।
आप्लुतः स्नातके स्नातेऽप्यावर्तः पयसां भ्रमे ।
आवर्तने चिन्तने चानर्तो जनपदे जने ।।२३५।।

स्त्रियां । त्रिष्वपि यथा—दुरितान्यदितिर्द्यमु । अंहतिस्त्यागरोगयोः। हंति अंहतिः। हंतेरंह च (उ० ६५४) इति अतिः। स्त्रियां त्यागो दानम् । रोगो रोगभेदः ।।२३३।। आपातः पाते तत्काले । आपतनं आपतन्त्यत्र वा आपातः। पाते यथा—पुष्पापातस्तकितमिदं भूतलं भूतभर्तुः । तत्काले यथा—आपातरम्या विषयाः पर्यंतपरितापिनः। आद्दतः सादरेऽर्चिते। आद्रियते आद्दतः । कर्तृकर्मणोः क्तः। वाच्यलिंगः। सादरे यथा—इति स्म पृच्छत्यनुवेलमाद्दतः। प्रियासखीः उत्तरकोशलेश्वरः। अर्चिते यथा—इत्याद्दतः सतरसारससारवह्निः। आख्यातं भाषिते त्यादौ । आख्यायते स्म आख्यातं । भाषिते वाच्यलिंगः। त्यादिस्त्याद्यन्तं पदं द्वयोर्यथा—मा स्म संधिं विजानन्तु मा स्म जानन्तु विग्रहं । आख्यातं यदि शृण्वन्ति भूयास्तेनैव पंडिताः। आघ्राते ग्रस्तशिंघिते आघ्रायते स्म आघ्रातं । वाच्यलिंगः। ग्रस्ते यथा—व्याघ्राघ्रातमृगी कृपा कुलमृगन्यायेन हिंसारुचे। शिंघिते यथा—स शीघ्रमाघ्रातकदंवगंधः।।२३४।। आप्लुतः स्नातके स्नाते पि। आप्लवते स्म आप्लुतः। स्नाते वाच्यलिंगः। वेदं समाप्य स्नातः स्नातकः। तत्र यथा—आप्लुतः प्लवते गृहं। स्नाते यथा—आप्लुतास्तीरमंदारकुसुमोत्क्करवीचिषु। आवर्तः पयसां भ्रमे। आवर्त्तने चिन्तने च। आवृत्यतेऽनेन आवर्तनं वा आवर्तः। पयसां भ्रमे यथा—संसर्पंत्याः स्खलितसुभगं दर्शितावर्त्तनाभेः।

समरे नृत्यशालायामाहतं तु मृषार्थके ।
गुणिते ताडिते चाप्याध्मातः शब्दितदग्धयोः ॥२३६॥
वातरोगेप्यथास्फोतः कोविदारार्कपर्णयोः ।
आस्फाता गिरिकर्ण्यां च वनमाल्ल्यामथाचितः ॥२३७॥

आवर्त्तनं भ्रमिः। पुनः पुनरध्ययनं वा। भ्रमौ यथा–चक्रावर्त्तविवर्त्तितक्षितिरजःपुंजैर्नभस्छादितं। अध्ययने चिन्तने च यथा–मंत्रावर्त्तप्रणिहितमना वर्त्तते सौ मुनीन्द्रः। आनर्तो जनपदे जने। समरे नृत्यशालायां। आनृत्यत्यसौ अस्मिन् वा आनर्तः। जनपदो देशविशेषः। जनस्तन्निवासी ॥२३५॥ समरे नृत्यशालायां च यथा–आनर्त्तनर्तनविवर्तितखड्गवल्ली कान्ताक्षतक्षपितशत्रुनिकायकायः। आहतं तु मृषार्थके। गुणिते ताडिते चापि। आहन्यते आहतं वाच्यलिंगः। मृषार्थके यथा–धिक् धिक् तवाहतमिदं वचनं वंचनात्मकम्। गुणिते यथा–पंचाहतैश्चतुर्भिर्वराटकैः काकणी चैका। ताडिते यथा–आहतं कुचतटेन तरूण्याः साधुसोढमुमुनेति पपात। आध्मातः शब्दितदग्धयोः। वातरोगे पि। आध्मायते स्म आध्मातः। शब्दितदग्धयोर्वाच्यर्लिंगः। शब्दिते यथा–आध्माते पांचजन्ये जनयति जनतानंदकन्दप्ररोहम्। दग्वे तापिते यथा–आध्माततात्रच्छविः ॥२३६॥ वातरोग आयुर्वेदप्रसिद्धः। अथास्फोतः कोविदारार्कपर्णयोः। आस्फायते आस्फोतः। आस्फायेर्डिदित्योतः। कोविदारार्कपर्णौ वृक्षौ। आस्फाता गिरिकर्ण्यां च वनमाल्ल्यां। एते ओषधी। अथाचितः। छादिते शकटोन्मेये पलानामयुतद्वयोः। संगृहीतेपि। आचीयते स्म आचितः। छादिते संगृहीते च वाच्यलिंगः। छादिते यथा–चैत्येषु तेषु कुसुमप्रकराचितेषु। शकटेन उन्मेयः शकटोन्मेयः।



छादिते शकटोन्मेये पलानामयुतद्वयोः ।
संगृहीतेप्यथायस्तः क्लेशिते तेजिते हते ॥२३८॥
क्रुद्धे क्षिप्तेऽथायतिः स्यात्प्रभावोत्तरकालयोः ।
दैर्घ्ये संगेऽप्याकृतिस्तु जातौ रूपे वपुष्यपि ॥२३९॥
आयत्तिर्वासरे स्नेहे वशित्वे स्थाम्नि सीम्नि च ।
आसत्तिः संगमे लोभेप्यापत्तिः प्राप्तिदोषयोः ॥२४०॥

शकटेन वोढुं शक्यो भार इत्यर्थः। पलानामयुतद्वयं दश भाराः। एवं च आचितशब्द एकस्मिन् भारे दशसु च भारेषु वर्त्तते इत्यर्थः। यदमरः। "आचितो दश भाराः स्युः शाकटो भार आचितः" ॥२३७॥ संगृहीते यथा–अर्द्धाचितासत्वरमुच्छि(च्छ्रि)तायाः। अथायस्तः। क्लेशिते तेजिते हते। क्रुद्धे क्षिप्ते। आयस्यति आयस्यते वा आयस्तः। पंचस्वर्थेषु वाच्यलिंगः। क्लेशिते क्षिप्ते च यथा–आयस्तमैक्षत जनश्चटुलाग्रपादं गच्छन्तमुच्छलितचामरचारुमश्वं। तेजिते यथा–आयस्तासिलतोल्लसद्रिपुकुले कालायमानो रणे। हते यथा–मंथायस्तार्णवांभः प्रतिकुहरचलन्मन्दरध्वानधीरः ॥२३८॥ क्रुद्धे यथा–आयस्तशक्रनिवहाहननप्रवृद्धः। अथायतिः स्यात्प्रभावोत्तरकालयोः। दैर्घ्ये संगेपि। आयस्यतेऽनया आयतिः। आयतंतेऽस्यामिति वा स्त्रियां। प्रभावोत्तरकाले च यथा–रहयत्यापदुपेतमायतिः। दैर्घ्ये यथा–बिभ्राणमायतिमतीमवृथाशिरोधम्। संगः संश्लेषः। आकृतिस्तु जातौ रूपे वपुष्यपि। आक्रियतेऽनया आकरणं वा आकृतिः। स्त्रियां। जातौ यथा–क्षत्राकृतिः कोऽपि युवा प्रविष्टः। रूपं संस्थानविशेषः। तत्र यथा–यत्राकृतिस्तत्र गुणा वसन्ति। वपुषि यथा–अलभ्यशोकाभिमवेयमाकृतिः ॥२३९॥ आयत्तिर्वासरे स्नेहे

**आपद्यपींगितं तु स्याच्चेष्टायां गमनेपि च ।**
**उत्तप्तं चंचले शुष्कमांससंतप्तयोरपि ॥२४१॥**
**उचितं विदितेऽभ्यस्ते मिते युक्तेप्यथोत्थितम् ।**
**वृद्धिमत्प्रोद्यतोत्पन्नेषूदितं तूद्गतोक्तयोः ॥२४२॥**

वशित्वे स्थाम्नि सीम्नि च । आयतन्तेऽत्र आयतनं वा आयत्तिः। स्त्रियां । सर्वेषु यथा–आयत्तौ कार्यसंपत्तिः । आसत्तिः संगमे लोभे पि। आसदनं आसत्तिः। स्त्रियां । द्वयोर्यथा–बाणाहवे व्याहत-शंभुशक्तेरांसक्तिमासाद्य जनार्दनस्य । आपत्तिः प्राप्तिदोषयोः । आपद्यपि । आपदनं आपत्तिः । स्त्रियां । त्रिष्वपि यथा–द्रव्यापत्तौ भवति न मनो विह्वलं कस्य कस्य ॥२४०॥ इंगितं तु स्याच्चेष्टायां गमनेऽपि च । इगु गतौ । इंगनं इंगितं । द्वयोर्यथा–तस्य संवृतमंत्रस्य गूढाकारेंगितस्य च । उत्तप्तं चंचले शुष्कमांस-संतप्तयोरपि । उत्तप्यते स्म उत्ताप्तं चंचलसंतप्तयोर्वाच्यलिंगः । चंचले यथा–उत्तप्तसप्लिनिवहाप्रकुतूहलानाम् । शुष्कमांसे यथा–उत्तप्ते कृमयो यथा । संतप्ते यथा–कुपितमदनमुक्तोत्तप्त-नाराचलीलाम् ॥२४१॥ उचितं विदितेभ्यस्ते मिते युक्तेऽपि । उच्यति स्म उचितं । चतुर्ष्वर्थेषु वाच्यलिंगः । विदितं ज्ञानं तत्र यथा–स्पर्शमुष्णमुचितं दधच्छिखी यद्ददाह हविरद्भुतं न तत् । अभ्यस्ते यथा–मम्लनुर्न मणिकुट्टिमोचितो । मातृपार्श्वपरिवर्त्त-नाविव । मिते यथा–उचितरुचितवादी कैर्न वंद्यो मुनीन्द्रः । युक्ते यथा–उचितमनुचितं वा वेत्ति कः पंडितोऽपि । अथोत्थितं । वृद्धिमत्प्रोद्यतोत्पन्नेषु । उत्तिष्ठते स्म उत्थितं । वाच्यलिंगः । वृद्धिमति यथा–गृहादग्निरिवोत्थितः। प्रोद्यतः सोद्वेगस्तत्र यथा–समरायोत्थितस्तदा । उत्पन्ने यथा–उपप्लवाय लोकानां धूमकेतु-



**उद्धृतं स्यादुत्तुलिते परिभुक्तोज्झितेऽपि च ।**
**उषितं न्युषिते प्लुष्टे उच्छ्रितं तूच्चजातयोः ॥२४३॥**
**प्रवृद्धे स्यादथोद्वान्त उद्गीर्णे निर्मदे द्विपे ।**
**उदात्तोदातृमहतोर्हृद्ये च स्वरभिद्यपि ॥२४४॥**

रिवोत्थितः। उदितं तूद्गतोक्तयोः। उदेति स्म उदितं । उद्यतो स्मेति वा । वाच्यलिंगः । उद्गते यथा–उदिते तु सहस्रांशौ न खद्योता न चन्द्रमाः। उक्ते यथा–अधिरुह्यतामिति महीभृतोदितः कपिके-तनार्पितकरो रथं हरिः ॥२४२॥ उद्धृतं स्यादुत्तुलिते परिभुक्तो-ज्झितेपि च । उद्ध्रियते स्म उद्धृतं । वाच्यलिंगः । उत्तुलिते उत्क्षिप्ते यथा–वल्मीकः किमुतोद्धृतो गिरिरियात्कस्य स्पृशेदा-शयम् । परिभुक्तोषिते यथा–क्षिपेदप्सूद्धृतं ततः । उषितं न्युषिते प्लुष्टे । वसति स्म उषितं । क्ते क्षुधवसस्तेषामितीटि । यजादि ति पृतिघस्वस इति षत्वम् । उषू दाहे तस्य वा मतांतरेणेति उषितं । वाच्यलिंगः । न्युषिते यथा–वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः। प्लुष्टं दग्धं तत्र यथा–उषितशिखरि शाखी दाववह्निः क्व चैषः । उच्छ्रितं तूच्चजातयोः । प्रवृद्धे स्यात् । उच्छ्रयति स्म उच्छ्रितं । वाच्यलिंगः । उच्चे यथा–अत्युच्छ्रितेषु गिरिकुटतटेषु वायोः। जाते यथा–उच्छ्रितां कुरु विराजितांतरा ॥२४३॥ प्रवृद्धे यथा–उच्छ्रितानि पतितानि पतितान्युच्छ्रितानि च । अथोद्वान्त उद्गीर्णे निर्मदद्विपे । उद्वम्यते उद्वमति स्म वा उद्वान्तः । उद्गीर्णे वाच्यलिंगः । तत्र यथा–उद्वान्तगरलैः सर्पैः । निर्मद-द्विपो मदरहितो गजः। उदात्तोदातृमहतोर्हृद्ये च स्वरभिद्यपि । उदादत्ते स्म उदात्तः। स्वरभिदि पुंसि । अन्यत्र वाच्यलिंगः । दातरि यथा–किमदेयमुदात्तानां । महति हृद्ये च यथा–धीरो-

**उन्मत्तो मुचकुन्दे स्याद्धतूरोन्मादयुक्तयोः ।**
**उदंतः साधौ वार्त्तायामुद्धातः समुपक्रमे ।।२४५।।**

**मुद्गरेऽभ्यासयोगाय कुंभकादित्रयेऽपि च ।**
**पादस्खलन उद्रंगेऽप्युन्नतिस्ताक्ष्यर्ययोषिति ।।२४६।।**

**उदये च समृद्धावप्येधतु नरि पावके ।**
**क्रंदितं रुदितं हुतौ कलितं विदिताप्तयोः ।।२४७।।**

दात्तगुणोत्तरो रघुपतिः। काव्यार्थबीजं स्वरभिदि यथा–निहत्यरीनेकपदे उदात्तः स्वरानिव ।।२४४।। उन्मत्तो मुचकुंदे स्याद्धत्तूरोन्मादयुक्तयोः। उन्माद्यति स्म उन्मत्तः। उन्मादयुक्ते वाच्यलिंगः मुचकुन्दो वृक्षजातिः। धत्तूरे यथा–उन्मत्तकरसास्वादां। उन्मादयुक्ते यथा–उन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः। उदंतः साधौ वार्त्तायां। उद्गतो अन्तोऽस्य उदंतः। साधौ वाच्यलिंगः। तत्र यथा – उदंता दांतचेतसः। वार्त्तायां यथा–कान्तो दान्तः सुहृदुपहृतः संगमात्किंचिदूनः। उद्घातः समुपक्रमे। मुद्गरेऽभ्यासयोगाय कुंभकादित्रयेपि च। पादस्खलन उद्रंगेऽपि। उद्धननं उद्धन्यते अनेन वा उद्घातः। पंचस्वर्थेषु समुपक्रमे आरंभे यथा–आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ।।२४५।। मुद्गरे यथा–उद्घातघातित्तपदातिरयं प्रयाति। योगिनां पवनजयनिमित्तं योऽभ्यासयोगस्तदर्थं कुंभकरेचकपूरकत्रयं। पादस्खलने यथा-ययावनुद्घातसुखेन मार्गम्। उद्गतो रंगोऽस्य उद्रंगः। द्रव्यभेदः। उन्नतिस्ताक्ष्यर्ययोषिति। उदये च समृद्धावपि। उद्गता मतिर्यस्या उन्नमनं वा उन्नतिः। स्त्रियां। ताक्ष्यर्ययोषित् गरुडपत्नी ।।२४६।। उदयसमृद्धयोर्यथा–असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः। एधतुर्नरि पावके। एधते एधतुः। वह्निमहिगुह्ये-



**किरातः स्यादल्पतनौ भूनिम्बम्लेच्छयोरपि ।**
**किराती कुट्टनी गंगा कृतांतोऽक्षेमकर्मणि ।।२४८।।**

**सिद्धान्तयमदैवेषु गर्जितो मत्तकुंजरे ।**
**गर्जितं जलदध्वाने ग्रन्थितं हतदृब्धयोः ।।२४९।।**

भिभ्योऽतुः। (उ० ७७९)। ना मनुष्यः। पावकोऽग्निः। क्रंदितं रुदितं हुतौ। क्रन्दनं क्रंदितं। रुदिते यथा–हा तातेति क्रंदितमाकर्ण्य विषण्णः। हूतिराकारणं। कलितं विदिताप्तयोः। कल्यते स्म कलितं। वाच्यलिंगः। विदिते यथा–अकलितविदैव नियोगाः। आप्ते यथा–पायात्स वः शशिकलाकलितावतंसः। संख्याततुलितक्षिप्रशब्दितेष्वपि मंखः। संख्याते यथा–अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधौ। तुलि यथा–करकलितहराद्रेर्दुष्करं किं हि तस्य। क्षिप्ते यथा–संग्रामे कलितोऽपि शत्रुनिवहस्तुष्टाव कीर्तिं तव। शब्दिते यथा–कलितकीर्तिषु शक्रमुखेषु ।।२४७।। किरातः स्यादल्पतनौ भूनिम्बम्लेच्छयोरपि। किरति किरातः। कृ वृ कल्पलीत्पातक्। (उ० २०९) अल्पतनौ यथा–पर्यंताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं। कुब्जानी च तथैव यांति शनकैरात्मेक्षणाशंकिनः। भूनिंबः। किराततिक्ताख्यमोषधं। म्लेच्छे यथा–विदन्ति मार्गं नखरंध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः। किराती कुट्टनी गंगा। गौरादित्वाद्ङीः। कुट्टनी संभली। गंगा जाह्नवी। द्वयोर्यथा–भ्रातर् द्विजपरित्यक्ताकिरातीयं करोतु किम्। कृतांतोऽक्षेमकर्मणि। सिद्धान्तयमदैवेषु। कृतस्यान्तः कृतान्तः। कृतः सिद्धोऽतोनिष्ठाऽस्य वा। कृतोऽन्तोऽनेन वा कृतांतः। चतुर्ष्वर्थेषु अक्षेमकर्मणि अशुभे कर्मणि यथा–कृती कृतान्तं कुरुते न जातु ।।२४८।। सिद्धान्ते यथा–

आक्रान्ते च गरुत्मांस्तु विहगे पन्नगाशने ।
गभस्तिः स्याद्दिनकरे स्वाहाकिरणयोरपि ॥२५०॥
गोदंतो हरिताले स्यात्संनद्धे दंशितेऽपि च ।
गोपतिः शंकरे षंडे नृपतौ त्रिदशाधिपे ॥२५१॥

कृतान्तमाप्नोति न निर्विवेकः। यमे यथा—कृतांतः कुपितस्तस्मै तस्मिन्दैवं पराङ्मुखम् । दैवे यथा—क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः। गर्जितो मत्तकुंजरे । गर्जति स्म गर्जितः। मत्तकुंजरो मत्तगजस्तत्र गर्जितशब्दो भारताद्यौ प्रसिद्धः। गर्जितं जलदध्वाने गर्जनं गर्जितं यथा – तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः । जलदेत्युपलक्षणं । तेनान्यत्रापि । यथा—सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् । ग्रन्थितं हतदृब्धयोः । आक्रान्ते च । ग्रंथ्यते स्म ग्रंथितं वाच्यलिंगः । त्रिष्वपि यथा—ग्रंथितं दयितया नवमाल्यं ॥२४९॥ गरुत्मांस्तु विहगे पन्नगाशने । गरुंति विद्यतेऽस्य गरुत्मान् । विहगे यथा—विदूरभावेन रवेर्गरुत्मतां । पन्नगाशने यथा—किं भक्षणात्त्वं विरतो गरुत्मन् । गभस्तिः स्याद्दिनकरे स्वाहा-किरणयोरपि । गृध्यति गभस्तिः । गृधेर्गमचेति (उ० ६६१) अस्तिक् । स्वाहायां स्त्रियां । शेषयोः पुंसि । दिनकरे यथा—ध्वान्तं हिनस्ति द्युतिभिर्गभस्तिः । स्वाहा अग्निभार्या । किरणे यथा—गभस्तीनां पत्युस्तितउतुलनां मंडलमगात् ॥२५०॥ गोदन्तो हरिताले स्यात् । संनद्धे दंशितेऽपि च । गुध्यंते गोदन्तः। सीमन्त हेमन्त (उ० २२२) इति साधुः । गां दाम्यति वा । दम्यमीति (उ० २००) साधुः । संनद्धदंशितयोर्वाच्यलिंगः । हरितालं धातुभेदः । तत्र पुंसि । क्लीबेऽपि केचित् । संनद्धो



सहस्रकिरणे चापि ज्वलितौ दग्धभास्करौ ।
जयन्तावैन्द्रिगिरीशौ जयन्त्युमापताकयोः ॥२५२॥
जीवन्त्यामिन्द्रपुत्र्यां च जगतीच्छंदसि क्षितौ ।
जंबूवप्रे जने लोके जामाता दुहितुः पतौ ॥२५३॥

व्यूढकंकटः । दंशितो दष्टः । गोपतिः शंकरे षंढे नृपतौ त्रिद-शाधिपे । सहस्रकिरणे चापि । गोर्वृषस्य उस्रायाः पृथिव्याः स्वर्गस्य त्विषां वा पतिः गोपतिः । शंकरे षंढे त्रिदशाधिपे च यथा—मनः प्रीणाति गोपतिः । नृपतौ सहस्रकिरणे च यथा—क्रामत्यंबरखंडमात्रविभवो देशांतरं गोपतिः ॥२५१॥ ज्वलितौ दग्धभास्वरौ । ज्वलति स्म ज्वलितः । वाच्यलिंगः । दग्धे यथा—हुतभुजा ज्वलिता वनान्तः । भास्वरे यथा—ज्वलितं न हिरण्यरेतसं चयमास्कंदति भस्मनां जनः । जयन्तावैंद्रि-गिरीशौ । जयति जयन्तः । नृ जि भू इत्यंतः । ऐंद्रिरिन्द्र-सुतः । तत्र यथा—यथा जयंतेन शचीपुरंदरौ । गिरीशे शंभौ यथा—पुरा विजेता जयताज्जयंतः । जयन्त्युमापताकयोः । जीव-न्त्यामिन्द्रपुत्र्यां च । उमायां धवयोगादन्यत्र तु गौरादित्वाद्ङीः । जीवन्ती मधुस्रवा । चतुर्ष्वपि यथा—जगज्जयंती स्वगुणैर्जयन्ती ॥२५२॥ जगतीच्छंदसि क्षितौ । जंबूवप्रे जने लोके । गच्छति जगती । गमेर्ङीः द्वेचेति कर्तृः । अधातुदृदित इति ङीः। छन्दो द्वादशाक्षराजातिः। यदाह—त्रिष्टुप् च जगती चैव । क्षितौ पृथि-व्यां यथा— त्रिःसप्तकृत्वो जगतीपतीनां । जंबूर्जंबूद्वीपस्तस्य वप्रः । तत्र यथा—जगतीजालकटकैः । जनः प्रजा । लोको विष्टपं । तत्र यथा—सत्यं सुंदरि वेधसस्त्रिजतीसारं त्वमेका

**सूर्यावर्त्ते वल्लभे च जीमूतो वासवेऽम्बुदे ।**
**घोषकेऽद्रौ भृतिकरे जीवन्ती शमिवंदयोः ॥२५४॥**
**जीवन्त्यां च गुडूच्यां च जीवातुर्जीवनौषधे ।**
**जीविते च जंभितं तु विचेष्टितप्रवृद्धयोः ॥२५५॥**

कृतिः । जामाता दुहितुः पतौ सूर्यावर्त्ते वल्लभे च । जायां प्रजायां मिन्वंति तमिति जामाता । जायामिग (उ० ८६०) इति तृः । दुहितुः पतौ यथा – जामातुरग्रेसरतां प्रपद्य ॥२५३॥ सूर्यावर्त्त ओषधिः। वल्लभो दयितः । जीमूतो वासवेऽम्बुदे । घोषकेऽद्रौ भृतिकरे । जीवंत्यनेन जीमूतः । जीवेर्मवेत्यूतः । जीवनस्य जलस्य मूतः पुटबंधो वा । पृषोदरादित्वात् । घोषकभृतिकरयोर्वाच्यलिंगः । वासवे यथा–पौलोमीवल्लभः सोऽयं जीमूतो वै प्रवर्षति । अम्बुदे यथा–जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिं । घोषकः पुनः पुनरुच्चैः शब्दकर्ता अद्रौ यथा–धन्यास्ते क्षपयंति जीवितमिदं जीमूतकुंजे क्वचित् । भृत्यां भृतिं वा करोति भृतिकरः। जीवन्ती शमिवंदयोः। जीवन्त्यां च गुडूच्यां च । जीव्यादिति जीवन्ती। रुदि नंदीति टिदंतः। शमिर्वृक्षः। वंदो वृक्षरुहानाम वृक्षः। यो वृक्षस्योपरि प्ररोहति ॥२५४॥ जीवन्तो मधुस्रवा । गुडूची अमृता । जीवातुर्जीवनौषधे । जीविते च । जीव्यतेऽनेन जीवनं वा जीवातुः। जीवेरातुः। पुंक्लीबः। जीवनस्यौषधमुपायः। तत्र यथा – प्राचीमंकुरयंति किंचन रुचो राजीवजोवातवः । जीविते यथा–जीवातवे विसृज शूद्रमुनौ कृपाणं । जंभितं तु विचेष्टितप्रवृद्धयोः । जं(जृं)भायां स्फुटिते चापि । जंभणं जंभितं । चतुर्ष्वपि यथा–रम्यं वदनजंभितं । क्रियावति वाच्यलिंगः ॥२५५॥



**जंभायां स्फुटिते चापि त्वरितं वेगतद्वतोः ।**
***त्रिगर्तो गणिते देशे त्रिगर्ता कामुकस्त्रियाम् ॥२५६॥**
**घुघुर्य्यामथ तृणता तृणत्वे कार्मुकेऽपि च ।**
**दंशितो वर्मिते दष्टे स्रवन्ती च द्रवन्त्यपि ॥२५७॥**
**नद्यामोषधिभेदे च द्विजातिर्ब्राह्मणेऽडजे ।**
**दुर्जातं व्यसनासम्यक्जातयोरथ दुर्गतिः ॥२५८॥**

त्वरितं वेगतद्वतोः। त्वरणं त्वरितं। त्वरते स्म वा। तद्वति वाच्यलिंगः। वेगे यथा–शस्त्रं शस्त्रं न शस्त्री त्वरितमहह हा कर्कशत्वं नखानाम् । तद्वति यथा–त्वरितैस्तुरगैर्ययुः। त्रिगर्त्तो गणिते देशे । त्रयो गर्तोऽस्य त्रिगर्तः । गणितं गणितभेदः । देशे प्रायेण पुंभूम्नि । तत्र यथा–परित्रिगर्तं प्रववर्ष मेघः। त्रिगर्त्ता कामुकस्त्रियां घुर्घुर्य्यां । कामुकी चासौ स्त्री च कामुकस्त्री ॥२५६॥ घुर्घुरी किंकणी । अथ तृणता तृणत्वे कार्मुकेऽपि च । तृणस्य भावः तृणता । तृणवत्ताडयति वा । क्वचिदिति डे पृषोदरादित्वात् । तृणत्वे यथा–तां रत्नतां च तृणतां च निसर्गसिद्धां तेषां पुनर्घटयितुं नियतं वराकः। कार्मुके यथा–कामुकानि वनालिकान् तृणताः सहसामुचन्। वल्लभस्तु धनुषि त्रिषु नता तृणता इत्याह । तत्र तु गणिकापक्षे णत्वं चिन्त्यम् । दंशितो वर्मिते दष्टे । दंशेर्ण्यंतात् क्ते दंशितः। दंशः संजातोऽस्य वा वाच्यलिंगः। वर्मिते यथा–दंशितैर्नाशितं बलं। दष्टे यथा–दंदशूकैश्च दंशिता। स्रवन्तीव द्रवंत्यपि नद्यामोषधिभेदे च। स्रवति द्रवति च स्रवन्ती द्रवंती च ॥२५७॥ नद्यां यथा–परकीर्तिस्रवतीनां न प्रवेशमदत्त यः। ओषधिभेदः आखुपर्णी । द्विजातिर्ब्राह्मणेऽडजे ।

 *मु० मू० तालितं स्तनिते वस्त्रे वाद्यभाण्डे गुणे स्तुतौ। त्रिगर्तो०।

नरके निःस्वतायां च दृष्टान्तः स्यादुदाहृतौ ।
शास्त्रेऽथ निकृतं विप्रलब्धे विप्रकृतेऽधमे ।।२५९।।
निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते ।
निष्ट्यूते प्रतिहते च निमित्तं हेतुलक्ष्मणोः ।।२६०।।

द्विर्जातिर्जन्माऽस्य द्विजातिः । ब्राह्मणेत्युपलक्षणं तेन क्षत्रियवैश्यावपि । यदाह—ब्राह्मणः क्षत्रियो वैश्यः त्रयोवर्णा द्विजातयः । ब्राह्मणेंऽडजे च यथा—द्विजातीनां शब्दैर्मुखरितविभाते सुदिवसे । दुर्जातं व्यसनासम्यक्जातयोः । दुर्जायते स्म दुर्जातं । असम्यक् जाते वाच्यलिंगः । व्यसने यथा—दुर्जातबंधुरयमृच्छ हरीश्वरो मे । असम्यक् जाते यथा—दुर्जातास्ते व्यसननिवहाः केन शक्याः विसोढुम् । अथ दुर्गतिः । नरके निःस्वतायां च । निंदिता गतिर्दुर्गतिः ।।२५८।। नरके स्त्रीपुंसः । निःस्वतायां स्त्रियां । द्वयोर्यथा—त्वत्पादपंकेरुहपांसुलिप्तो । न दुर्गतिं याति जनः कदाचित् । दृष्टान्तः स्यादुदाहृतौ । शास्त्रे । दृष्टोंऽतो निश्चयोऽत्र दृष्टान्तः । उदाहृतौ यथा—पूर्णचन्द्रोदयाकांक्षी दृष्टान्तोऽत्र महार्णवः । शास्त्रे यथा—अभ्यस्तदृष्टान्तशतस्य तस्य । अथ निकृतं विप्रलब्धे विप्रकृतेऽधमे । निक्रियते स्म निकृतं । वाच्यलिंगः । विप्रलब्धो वंचितः । विप्रकृतः पराभूतः । तयोर्यथा—निकृतोऽपि न याति विक्रियां । अधमः क्रूरः ।।२५९।। निरस्तः प्रेषितशरे संत्यक्ते त्वरितोदिते । निष्ट्यूते प्रतिहते च । निरस्यते स्म निरस्तः । प्रेषिते शरे पुंसि । अन्यत्र वाच्यलिंगः । प्रेषितशरे प्रतिहते च यथा—राज्ञा निरस्तैः रिपवो निरस्ताः । संत्यक्ते यथा—निरस्तनारीसमयादुराधयः । त्वरितोदिते यथा—एते निरस्तवचनाः सूचयन्त्यर्त्तिमातुराम् । निष्ट्यूते यथा—



निवातो वातरहिते दृढसन्नाह आश्रये ।
निर्मुक्तो मुक्तनिर्मोकभुजगे निष्परिग्रहे ।।२६१।।
निशांतं सदने शांते प्रभातेऽप्यथ निर्वृतिः ।
मोक्षे मृत्यौ सुखे सौस्थ्ये निकृतिः शठशाठ्चयोः ।।२६२।।

निरस्तांबुकणोंऽबुदः । निमित्तं हेतुलक्ष्मणोः। निमियतेऽनेन निमित्तं । पुत्रपित्तेति (उ० २०४) साधुः । हेतुः कारणं । लक्ष्म लक्ष्मणं चक्षुः स्पन्दनादि । हेतौ यथा—पुंसां कुलं न हि निमित्तमुदात्ततायाः । लक्ष्मणि यथा—तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।।२६०।। निवातो वातरहिते दृढ़सन्नाह आश्रये । निवृत्तो वातोऽत्र निवायते गम्यते वा निवातः । वातरहिते वाच्यलिंगः । अन्यत्र पुंक्लीबः । वातरहिते यथा— निवातनिष्कंपमिव प्रदीपं । दृढश्चासौ सन्नाहश्च दृढसन्नाहः । शस्त्राभेद्यं वर्म्म । तत्र यथा—निवातकवचच्छन्नशरीरास्ते भटा बभुः । आश्रये यथा—एते निवातास्तरवो मुनीनाम् । निर्मुक्तो मुक्तनिर्मोकभुजगे निष्परिग्रहे । निर्मुंचति स्म निर्मुक्तः । निष्परिग्रहे वाच्यलिंगः । मुक्तनिर्मोकभुजगे यथा — निर्मुक्तशेषधवलैरचलेन्द्रमंथसंक्षुब्धदुग्धमयसागरगर्भगौरैः । निष्परिग्रहे यथा—निर्मुक्तो मुक्तिसौख्यभाक् । त्यक्तनिर्ग्रंथिकयोरपि मंखः । क्रमेण यथा—निर्मुक्तसर्वभावस्य । निर्मुक्तकवरीभारव्याप्तवक्षस्थलाऽधमे ।।२६१।। निशांतं सदने शान्ते प्रभातेऽपि । निशाम्यति स्म निशांतं । शान्ते वाच्यलिंगः । सदने यथा—इत्यल्पेतरकल्पनाकवलितस्वान्ता निशांतान्तरे । शान्ते यथा—निशांतचित्ते मुनिपुंगवेऽपि । प्रभाते यथा—वसनमपि निशान्ते मेष्यते तत्प्रदातुम् । अथ निर्वृतिः । मोक्षे मृत्यौ सुखे सौस्थ्ये । निर्वरणं निर्वृतिः ।

भर्त्सनेऽभिभवे क्षेपे निःकूतिर्निरुपद्रवे ।
अलक्ष्म्यां दिक्पतौ चापि नियती दैवसंयमौ ॥२६३॥
प्रभूतोद्गते प्राज्ये प्रसूतं जातपुष्पयोः ।
प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः ॥२६४॥

स्त्रियां । मोक्षे यथा–अमूलमंत्रतंत्रं च कार्मणं निर्वृत्तिश्रियः । मृतौ यथा–गंगातटे निर्वृतिमाप भूपः । सुखे सौस्थ्ये च यथा–निर्वृतिर्हि मनसो मदहेतुः । निकृतिः शठशाठ्ययोः । भर्त्सनेऽभिभवे क्षेपे । निक्रियतेऽसौ अनया वा निकृतिः। शठे वाच्यलिंगः। अन्यत्र स्त्रियां । शठे यथा–वर्जयेन्निकृतीन्खलान् । शाठ्ये यथा–अर्थस्य मूलं निकृतिः क्षमा च ॥२६२॥ भर्त्सनं कोपेन दंडाविष्करणं । अभिभवो घातप्रतिघातादिः । क्षेपो निन्दामात्रं । एतेषु त्रिषु यथा–निकृतिपरेषु परेषु भूरिधाम्नः । निःकूतिर्निरुपद्रवे । अलक्ष्म्यां दिक्पतौ चापि । निष्क्रांतकूतेः पीडाया: । निश्चिताकूतिरतो वा निःकूतिः । निरुपद्रवे वाच्यलिंगः । अलक्ष्म्यां स्त्रियाम् । दिक्पतौ पुंसि । निरुपद्रवे यथा–निःकूतिर्धर्म्मे कर्मठः। शेषयोर्यथा-पुण्यशेषेण विनाकृतः पुमान्। स याति निःकूत्युपभोग्यतां हठात् । नियती दैवसंयमौ । नियम्यतेऽनया नियमनं वा नियतिः स्त्रियां । दैवे यथा–नियतिः केन विलंघ्यते सखि । संयमे यथा–नियतिं विधाय चित्ते ॥२६३॥ प्रभूतमुद्गते प्राज्ये । प्रभवति स्म प्रभूतं । वाच्यलिंगः। द्वयोर्यथा–तृणैः प्रभूतैः परिभूषिता भूः। प्रसूतं जातपुष्पयोः। प्रसूते स्म प्रसूतं । जाते वाच्यलिंगः । तत्र यथा–भूभृद्भिरिक्ष्वाकुकुलप्रसूतैः। पुष्पे यथा–चूतप्रसूतैः कृतनव्यबाणः । प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः। प्रत्येति स्म प्रतीयते स्म वा प्रतीतः । पंचस्वर्थेषु वाच्यलिंगः। सादरप्राज्ञयोर्यथा–तत्प्रतीतमनसामुपेयुषां द्रष्टुमावहनमग्रजन्मनां । प्रथितज्ञातयोर्यथा–सोयं वटः श्याम इति प्रतीतः । हृष्टे यथा–प्रत्युज्जगामागमनप्रतीतः ॥२६४॥ प्रहतं विस्तृते क्षुण्णे । प्रहण्यते स्म प्रहतं । वाच्यलिंगः । विस्तृते विस्तीर्णः । क्षुण्णो व्युत्पन्नः । द्वयोर्यथा–शास्त्रप्रहतबुद्धिभिः । ताडितेऽपि । यथा–संगीताय प्रहतमुरजास्निग्धगंभीरघोषम् । पलितं पंकतापयोः। पक्वकेशे । केशपाके । पलति पलितं । हृश्यारुहि (उ० २१०) इति इतः । पलितानि सन्त्यस्य वा अभ्रादित्वादः । पंके पंकोपचारात् पानीयपृष्टवर्त्तमाने मलविशेषे तापे च यथा–पानीयनिर्गमनमार्गविवर्त्तनेन यानाद्रदाः पलितधूसरताममीयत् । पक्वश्चासौ केशश्च पक्वः केशोऽस्येति वा पक्वकेशः । कर्मधारयपक्षे पुंक्लीबः। बहुव्रीहिपक्षे वाच्यलिंग; । बहुव्रीहिपक्षे यथा–न तेन वृद्धो भवति येनास्य पलितं शिरः। केशस्य पाकः शौक्ल्यं केशपाकः । तत्र पक्वकेशे च यथा–कैकेयीशंकये चाह पलितच्छद्मना जरा । पंडितः सिल्हधीमतोः । पंड्यते स्म पंडितः । पंडा बुद्धिः संजाताऽस्येति वा धीमति वाच्यलिंगः । सिल्हो गंधद्रव्यं । धीमति यथा–यः क्रियावान्सः पंडितः ॥२६५॥ प्रणीत उपसंपन्ने कृते क्षिप्ते प्रवेशिते । संस्कृताग्नौ । प्रणीयते स्म प्रणीतः । संस्कृताग्नौ पुंसि । शेषेषु वाच्यलिंगः। उपसंपन्नं रूपरसादिनिष्पन्नमन्नादि ।



प्रहतं विस्तृते क्षुण्णे पलितं पंकतापयोः ।
पक्वकेशे *केशपाके पंडितः सिल्हधीमतोः ॥२६५॥
प्रणीत उपसंपन्ने कृते क्षिप्ते प्रवेशिते ।
संस्कृताग्नौ पर्याप्तं तु शक्ते पूर्णे निवारणे ॥२६६॥

*प्र० शैलजाते ।

यथेष्टे *प्रसृतस्त्वर्द्धांजलौ वेगिविनीतयोः ।
तते च प्रसृता जंघा प्रमीतं प्रोक्षिते मृते ॥२६७॥
पर्यस्तं तु हते स्रस्ते प्रपातः °सौप्तिके भृगौ ।
पर्वतो गिरिदेवर्ष्योः पक्षतिः प्रतिपत्तिथौ ॥२६८॥

तत्र यथा–प्रणीतमन्नं बुभेजे द्विजेन्द्रः । कृते यथा–भवत्प्रणोतमाचारमामनंति हि साधवः । क्षिप्ते यथा – धनुष्प्रणीतैः विशिखैः प्रणुन्नः । प्रवेशिते यथा–प्रधानवर्गस्य पुरः प्रणीतः संस्कृताग्नौ यथा–प्रणीते जुहुयाद्धव्यम् । पर्याप्तं तु शक्ते पूर्णे (तृप्तौ) निवारणे । यथेष्टे । पर्याप्यते स्म पर्याप्तं । शक्तपूर्णयोर्वाच्यलिंगः । शक्ते यथा – पर्याप्तोपि स यौद्धुमुद्धतमतिर्धत्ते नयान्नीचताम् । पूर्णे यथा–पर्याप्तपुष्पस्तबकस्तनीभ्यः । निवारणे यथा–पर्याप्तं तप्तवारिभिः । निवारणेऽव्ययमपि ॥२६६॥ यथेष्टे यथा–पर्याप्तमाप्ताः प्रविशन्तु मध्ये । प्रसृतस्त्वर्द्धांजलौ वेगिविनीतयोः । तते च । प्रसरति स्म प्रसृतः । अर्द्धांजलौ पुमान् । अन्यत्र वाच्यलिंगः । अर्द्धांजलौ यथा-एतां मे प्रसृताक्षि विक्षिपसि किं तोक्ष्णां कटाक्षच्छटाम् । वेगिनि यथा–पश्यैष प्रसृतो हस्ती । विनीते तते च यथा–नानाशास्त्रार्थसोद्बोधशुद्धप्रसृतबुद्धयः । प्रसृता जंघा । यथा–प्रसरत्प्रसृताहतः । प्रमीतं प्रोक्षिते मृते । प्रमीयते स्म प्रमीतम् । वाच्यलिंगः । प्रोक्षितं मखे हतं । यथा–प्रमीताः पशवो मखे । मृते यथा–भीष्मं भटैरप्रमितैः प्रमीतैः ॥२६७॥ पर्यस्तं तु हते स्रस्ते । पर्यस्यते स्म पर्यस्तं । वाच्यलिंगः । हते यथा–स्वहस्तपर्यस्तसमस्त-

* मु०मू० यथेष्टे दोष कृच्छ्रे च पर्याप्तिः परिच्छेदे । प्राप्ते कामे प्रसृतो० ० प्र० निर्झरे ।



पक्षमूले प्रसूतिः स्यादपत्ये प्रसवेऽपि च ।
पद्धतिः पथि पंक्तौ च प्रकृतिर्योनिशिल्पिनोः ॥२६९॥
पौरामात्यादिलिंगेषु गुणसाम्यस्वभावयोः ।
प्रत्यात्पूर्विकायां च प्रततिर्विस्तृतिर्लता ॥२७०॥

शत्रुः । स्रस्ते यथा–पर्यस्तहारावलिः । प्रपातः सौप्तिके भृगौ । प्रपंत्यनेनास्मिन्वा प्रपातः । सौप्तिकं रात्रिधाटी । तत्र यथा–यस्य प्रपातभयतो निशि न प्रसुप्ताः । भृगुरद्रितटः । पर्वतो गिरिदेवर्ष्योः । पर्वाणि सन्त्यस्य । मरुत्पर्वणस्त (७।२।१५) इति तः । पर्वति वा दृ सृ मृ भृ इत्यतः । गिरौ यथा–पर्वतेपरमाणौ च पदार्थत्वं व्यवस्थितं । देवर्षौ यथा–द्वन्द्वं नारदपर्वतौ । पक्षतिः प्रतिपत्तिथौ । पक्षमूले । पक्षस्य मूलं पक्षतिः । पक्षातिरिति तिः (७।१।८९) स्त्रियां । द्वयोर्यथा–गगनसरसिचन्द्रो हंसवत्पक्षती द्वे ॥२६८॥ प्रसूतिः स्यादपत्ये प्रसवेऽपि च । प्रसूयते प्रसवनं वा प्रसूतिः । स्त्रियां । अपत्ये यथा–मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा । प्रसवे यथा–आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा । पद्धतिः पथि पंक्तौ च । पादाभ्यां हन्यते पद्धतिः । हिमहतिकाषिये पदिति (३।२।९६) पदादेशः । स्त्रियां । पथि यथा–शिवपुरपद्धतिरेषा । पंक्तौ यथा–नैषाप्यत्र त्रियामारमणरुचिशुचिः पद्धतिर्मौक्तिकानाम् । प्रकृतिर्योनिशिल्पिनोः । पौरामात्यादिलिंगेषु गुणसाम्यस्वभावयोः । प्रत्ययात्पूर्विकायां च । प्रक्रियतेऽनया प्रकृतिः । प्रत्यात्प्रथमं क्रियते वा । अष्टस्वर्थेषु स्त्रियां । योनिरुपादानकारणं तत्र यथा–यामाहुः सर्वबीजप्रकृतिरिति । शिल्पिनि यथा–कृतज्ञाप्रकृतिः कुतः ॥२६९॥ पौरेषु पुरवास्तव्येषु यथा – तथैव सोऽभूदन्वर्थो

प्रवृत्तिर्वृत्तौ वार्त्तायां प्रवाहे *प्रार्थितं हते ।
याचिते शत्रुसंरुद्धे पार्वती द्रुपदात्मजा ॥२७१॥

राजा प्रकृतिरंजनात् । अमात्यादयः सप्तराज्यांगानि । यदमरः। स्वाम्यमात्यः सुहृत्कोशो राष्ट्रदुर्गबलानि च । राज्यांगानि प्रकृतयः।-तत्र यथा-अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया । लिंगं स्त्रीपुंनपुंसकं । महदादिकं च । क्रमेण यथा—तृतीया प्रकृतिः षंढः महदाद्याः प्रकृतिविकृतयः सप्त । गुणानां सत्वरजस्तमसां साम्यं गुणसाम्यं । तत्र यथा—बहिर्विकारं प्रकृतेः पृथग्विदुः । पुरातनं त्वां पुरुषं पुराविदः । स्वभावे यथा—विरराम महीयांसः। प्रकृत्या मितभाषिणः। प्रत्ययात्पूर्विकायां यथा—सोभवद्वारवधूसमागमः । प्रत्ययप्रकृतियोगसंनिभः । प्रततिविस्तृतिर्लता । प्रतननं प्रतन्यते वा प्रततिः । स्त्रियां । द्वयोर्यथा—विटपीव द्विपेन्द्रोऽयं पुष्पप्रततिभिर्वृतः ॥ २७० ॥ प्रवृत्तिर्वृत्तौ वार्त्तायां । प्रवाहे । प्रवर्त्तनं प्रवृत्तिः । स्त्रियां । वृत्तौ यथा—प्रवृत्तिरासीच्छब्दानां चारितार्थाचतुष्टयी । वार्त्तायां यथा—जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् । प्रवाहे यथा—प्रवृत्तिरेषा भूतानाम् । प्रार्थितं हते । याचिते शत्रुसंरुद्धे । प्रार्थ्यते स्म प्रार्थितं । वाच्यलिंगः । हते यथा—किमर्थं प्रार्थितः पशुः । याचिते यथा—भविष्यति प्रार्थितदुर्लभः कथं । शत्रुसंरुद्धे यथा—अन्योन्यप्रार्थितैर्भटैः । पार्वती द्रुपदात्मजा । शल्लकी जीवनी गौरी । पर्वतस्येयं पर्वते भवा वा पार्वती । पार्वत्यवतारत्वाद्वा ।

*मु० प्रवितः शकटोन्मेषे पलानामयुतद्वये । प्रकृतं तु प्रस्तुतेऽपि प्रकृतः प्रकृतिस्थिते ।



शल्लकी जीवनी गौरी पिंडितं गुणिते घने ।
पिशितं मांसं पिशिता मांसिका पीडितं पुनः ॥२७२॥
बाधिते करणे स्त्रीणां यंत्रान्तर्मर्दितेऽपि च ।
*प्रोक्षितं सिक्तहतयोर्भरतः शबरे नटे ॥२७३॥

द्रुपदात्मजा द्रौपदी ॥२७१॥ शल्लकी गजप्रिया । जीवनी मधुस्रवा । गौर्यां यथा—लीलाकमलपत्राणि गणयामास पार्वती । पिंडितं गुणिते घने । पिंड्यते स्म पिंडितम् । वाच्यलिंगः। गुणिते यथा—षष्टांशेन तु पिंडितं । घने यथा—भ्राम्यत्पिंडितचंडिमा कथमहो नाद्यापि विश्राम्यति । पिशितं मांसं । पिंशति पिशितं । कुसिपिशीति किदितः । यथा—तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा । पिशिता मांसिका । मांसिका गन्धद्रव्यं । पीडितं पुनः । बाधिते करणे स्त्रीणां यंत्रांतर्मर्दितेऽपि च । पीड्यते पीडितं ॥२७२॥ बाधिते यंत्रान्तर्मर्दिते च वाच्यलिंगः। बाधिते यथा—निद्रा तात कुतस्तेषां ये क(ऋ)णव्याधिपीडिताः। स्त्रीणां करणं वात्स्यायनप्रसिद्धं । यन्त्रांतर्मर्दिते यथा—वाचः श्रीकालिदासस्य पीडितेक्षुरसोपमाः । प्रोक्षितं सिक्तहतयोः । प्रोक्ष्यते स्म प्रोक्षितं । वाच्यलिंगः सिक्ते यथा—कन्याभिः प्रोक्षितैर्वृक्षैर्लक्षसो लक्षितं वनं । हतोऽर्थाद्यज्ञे यथा—मंत्रप्रोक्षितवालवर्करशिरः पूजोपहारैः क्षणात् । भरतः शबरे नटे । क्षेत्रे रामानुजे शास्त्रे दौष्यंतावृषभात्मजे । तंतुवाये । बिभर्ति भरतः। दृ पृ भृ इत्यतः । अष्टस्वर्थेषु शबरे नटे च यथा—पल्लीव भाति

*मु० पुटितः स्यूतपाटिते । हस्तिपुटे (हस्तपुटे) पृषतस्तु मृगे बिन्दौ खरोहिते । श्वेतबिन्दुयुतेऽपि स्यात्प्रेषितं प्रेरिते गते ।

**क्षेत्रे रामानुजे शास्त्रे दौष्यंतावृषभात्मजे ।**
**तन्तुवाये भारतं तु शास्त्रद्वीपांशभिद्यपि ।।२७४।।**
**भारती पक्षिणीवृत्तिभिदोर्वाच्यथ भावितं ।**
**वासिते प्राप्ते भासंतो भे सूर्ये रम्यभासयोः ।।२७५।।**

भरतैर्नवनाद्यशाला ।।२७३।। क्षेत्रे क्षेत्रविशेषे यथा–इहैव भरतक्षेत्रे। रामानुजे यथा–मातुः पापस्य भरतः प्रायश्चित्तमिवाचरत् । शास्त्रं नाद्यशास्त्रं तत्र यथा–तदिति भरतविद्भिर्लक्षितं नाट्यलक्ष्म । दौष्यंतौ दुष्यंतापत्ये यथा–भरतः कार्तवीर्यश्च षडेते चक्रवर्तिनः। ऋषभ आदिनाथस्तस्य आत्मजः पुत्रस्तत्र यथा–अवाप केवलज्ञानं भरतो भरातधिपः। तन्तुवायः कुविंदः। मुनिविशेषेऽपि यथा–अभ्यधाद्भरतो मुनिः। भारतं तु शास्त्रे द्वीपांशभिद्यपि। भरतानधिकृत्य कृतो ग्रन्थो भारतम्। अमोऽधिकृत्य ग्रंथे इत्यण्। भरतमेव वा भारतं। स्वार्थेऽण्। शास्त्रेऽण्। शास्त्रे यथा–सृष्टा गौरीदृशी येन भवे विस्तारिभारता। द्वीपांशभेदे यथा–एतेन भारतमिलावृतवद्विभाति ।।२७४।। भारतो पक्षिणीवृत्तिभिदोर्वाचि। भरतो विभ्रत इयं भारती। पक्षिणीभित् पक्षिणीविशेषः। वृत्तिभिदि यथा–कैशिक्यारभटी चैव सात्त्वती भारती तथा। वाचि वचने तद्देवतायां च यथा–तेषां भारति भारती सुरसरित्कल्लोललोलोर्म्मिभिः। अथ भावितं। वासिते प्राप्ते। भाव्यते स्म भावितं। वाच्यलिंगः। वासिते यथा–भावितं मृगमदेन तन्मधु। प्राप्ते यथा–भावितार्थैर्वनीपकैः। साक्षात्कृतोत्पादिताश्वस्तभक्तेष्वपि मंखः। साक्षात्कृते यथा–भावितात्मा भुवो भर्त्तुः। उत्पादिते यथा–तैस्तैर्वाक्यैर्विबुधगदितैर्भाविता तस्य भक्तिः। आश्वस्ते यथा–भावितैः कतिपयैः



**मथितं निर्जलघोले व्यालोडितनिघृष्टयोः ।**
**मालती युवतौ काकमाच्यां जातीविशल्ययोः ।।२७६।।**
**ज्योत्स्नायां निशि नद्यां च मुषितं खंडिते हृते ।**
**मूर्छितं सोच्छ्रये मूढे रजतो दंतिदन्तयोः ।।२७७।।**

पदातिभिः। भक्ते सेविते यथा–पुनः पुनश्चेतसि येन भावितं। भासंतो भे सूर्ये रम्यभासयोः। भासते भासंतः। तृ जृ भूवदीत्यंतः। रम्ये वाच्यलिंगः। भासः पक्षिभेदः। सर्वेषु यथा–द्यां भासयति भासंतः ।।२७५।। मथितं निर्जलघोले व्यालोडितघृष्टयोः। मथ्यते स्म मथितं। व्यालोडितनिघृष्टयोर्वाच्यलिंगः। निर्जलघोले व्यालोडिते च यथा–युवतीकरनिर्मथितं मथितं पिब हे नृप सर्वरुजापहरं। निघृष्टे यथा–मथितवंशसमुत्थितवह्निना। मालती युवतौ काकमाच्यां जातीविशल्ययोः। ज्योत्स्नायां निशिनद्यां च। मलते मालती। युतपित्तेति साधुः। गौरादित्वाङ्गीः। सप्तस्वर्थेषु युवतिः स्त्री। काकमाचीविशल्या ओषधिः। जात्यां यथा–ते चोन्मीलितमालती सुरभयः प्रौढाः कदंबानिलाः ।।२७६।। ज्योत्स्ना चन्द्रप्रभा। निशा रात्रिः। नद्यां नदीविशेषे यथा–मालतीतीरजष्टं कणः। मुषि(ण्ड)तं खंडिते हृते। मुष्यते स्म मुषितं। वाच्यलिंगः। खंडिते यथा-अलिमुखमुषितसरोरुहमकरंदस्यंदसुरभिता सरसी। हृते यथा–सत्यं किं विधुरासि वत्स मुषिता केनाम्ब दुर्वेधसा। मूर्च्छितं सोच्छ्रये मूढे। मूर्च्छा संजाताऽस्य मूर्छितं। तदस्य संजातमितीतः। वाच्यलिंगः। सोच्छ्रये यथा–चन्दनासक्तभुजगनिश्वासानिलमूर्छितः। मूढो जातमोहः। तत्र यथा–पपात मूर्छितः पृथ्व्यां। रजतो दंतिदंतयोः धवले शोणिते हारे दुर्वर्णे हृदशैलयोः। रजत्यनेन रजतं पृषिरंजीति किदतः सप्तस्वर्थेषु। शैले पुंसि

धवले शोणिते हारे दुर्वर्णे ह्रदशैलयोः ।
रसितं स्वर्णादिलिप्ते रुतस्तनितयोरपि ॥२७८॥
[1]रेवती बलभार्यायां नक्षत्रभिदि मातृषु ।
रैवतः स्यादुज्जयंते सुवर्णालौ पिनाकिनि[2] ॥२७९॥

॥२७७॥ धवले शोणिते च गुणे पुंसि तद्वति वाच्यलिंगः । शेषेषु पुंक्लीबः। दंतिनो दंतौ दंतिदंतौ । तत्र यथा—नयै राजन्ति राजानो रजतैरिव कुंजरा । धवले शोणिते च यथा—प्रतिफलति करौघे संमुखावस्थितायां । रजतकटकभित्तौ सान्द्रचन्द्रासु गौर्याम् । ह्रदे शैले च यथा—क्रीडन्ति कांताः रजतैश्च कान्तैः। रसितं स्वर्णादिलिप्ते रूतस्तनितयोरपि । रसण् आस्वादनस्नेहनयोः । रस्यते रसनं वा रसितम् । रसः संजातोऽस्य वा । स्वर्णादिलिप्ते वाच्यलिंगः । कनकरसितकुंभैः शोभते भूपवेश्म । रुतं वासितं तत्र यथा—सरसं सारसरसितं । स्तनिते मेघगर्जिते यथा—मुहरन्न तस्य रसितैः पयोमुचः ॥२७८॥ रेवती बलभार्यायां नक्षत्रभिदि मातृषु । रेवते रेवती । दृ पृ भृ इति बहुवचनादतः । नक्षत्रभिदि रेवतरो ह्णिेति ङीः । शेषयोस्तु रेरस्यास्तीति मतौ नाम्नीति वत्वे उदितत्वाङ्ङीः। बलभार्यायां यथा—रेवती दशनोच्छिष्टपरिपूतपुटे दृशौ । नक्षत्रभिदि यथा—सोमे न सौम्यं भृगुरेवती च । मातृषु यथा—स पुनर्जातमात्रोऽम्बारेवतीभिरगृह्यते। रैवतः स्यादुज्जयन्ते सुवर्णालौ पिनाकिनि । रायावतो रैवतः। उज्जयन्ते यथा—असौ गिरिं रैवतकं ददर्श । सुवर्णालुः सुवर्ण-करकपात्रिका तत्र यथा — रैवते न पयः पपौ । पिनाकिनि

१ मु० रमतिर्नायिके स्वर्गे रमितं स्तनिते रुते । २ प्र० हरेऽसुरे ।



रोहितो लोहिते मीने मृगे रोहितद्रुमे ।
रोहितं त्वृजुशक्रास्त्रे धीरे ललितमीप्सिते ॥२८०॥
लडिते हारभेदे च लोहिते मंगले नदे ।
वर्णभेदे लोहितं तु कुंकुमे रक्तचन्दने ॥२८१॥
गोशीर्षे रुधिरे युद्धे वर्द्धितं छिन्नपूर्णयोः ।
प्रसृते वनितं तु स्यात्प्रार्थिते सेवितेऽपि च ॥२८२॥

यथा— तं दैवतं रैवतनामधेयम् ॥२७९॥ रोहितो लोहिते मीने मृगे रोहीतकद्रुमे । रोहति रोहितः। दृश्यारुहीतीतः । लोहिते गुणे पुंसि । तद्वति वाच्यलिंगः । तत्र यथा—मसृणघुसृणराजी रोहितो रोहिणीशः । मीने मृगे च यथा—ऋगिति निरपराधान् रोहितान् घातयंति । रोहितं त्वृजुशक्रास्त्रे धीरे । ऋजुशक्रास्त्रे यथा — जातम् रोहितमेव केवलपमज्याबद्धमैन्द्रं धनुः। धीरे कुंकुमे यथा--आलोडितै रोहितपंकपूरैः। ललितमीप्सिते । लडिते हारभेदे च । ललण् ईप्सायां । लड् विलासे वा । लल्यते स्म लडति स्म वा ललितं । ईप्सितलडितयोर्वाच्यलिंगः । तयोर्यथा—गाढोत्कंठाललितललितै रंगकैस्ताम्यतीति ॥२८७॥ हारभेदो हारविशेषः । लोहिते मंगले नदे । वर्णभेदे । रोहितशब्दस्य रस्य लत्वे लोहितः। मंगलो भौमः । तत्र यथा—अश्विनी लोहिते श्रेष्ठः । नदे यथा—रोहितानां भवेन्नांबुसौहित्यं लोहितेपि किं । वर्णभेदे गुणे पुंसि तद्वति वाच्यलिंगः । तत्र यथा—लोहितायति कदाचिदातपे । लोहितं तु कुंकुमे रक्तचन्दने गोशीर्षे रुधिरे युद्धे । रुधिरे पुंक्लीबः । कूंकुमे यथा—गोरोचना लोहितं च शिलावदलमेव च ॥२८१॥ गोशीर्षं रक्तचन्दनं च चंदनविशेषो । रुधिरे यथा—ताः पूतनालोहितपानमत्ताः । युद्धं संग्रामः । वर्द्धितं च्छिन्नपूर्णयोः । प्रसृते । वर्द्धण् छेदनपूर्णयोः ।

**वनितोत्पादितात्यर्थरागनार्यपि नार्यपि ।**
**वसतिः स्यादवस्थाने निशायां सदनेऽपि च ॥२८३॥**
**व्रततिस्तु प्रतानिन्यां विस्तारेऽप्यथ वापितम् ।**
**बीजाकृते मुंडिते च व्याघातो योगविघ्नयोः ॥२८४॥**

वृधूङ् वृद्धौ वा ण्यन्तः वर्द्ध्यते स्म वर्द्धितं । वाच्यलिंगः । छिन्ने यथा–कुठारैर्वर्द्धितस्तरुः। पूर्णे यथा–द्रविणवर्द्धितकोशनिरीक्षणात् । प्रसृते यथा–वर्द्धिता कीर्तिजाह्नवी । वनितं तु स्यात् प्रार्थिते सेवितेऽपि च । वन भक्तो । वन्यते स्म वनितं । वाच्यलिंगः। द्वयोर्यथा–वनितं केन नो वनं ॥२८२॥ वनितोत्पादितात्यर्थ-रागनार्यपि नार्यपि । उत्पादितात्यर्थरागा नारी सामान्यनारी च । द्वयोर्यथा–वनेचराणां वनितासखानां । वसतिः स्यादवस्थाने निशायां सदनेऽपि च । वसन्त्यस्यामिति वसतिः । खल्यमीति (उ० ६५३) अतिः । स्त्रियां । अवस्थाने यथा–गन्तव्या ते वसतिरलकानामयक्षेश्वराणाम् । निशायां यथा–कतिचिदुषित्वा वसतीः । सदने यथा– देव्याविभ्रमसद्म पद्मवसतेः ॥२८३॥ व्रततिस्तु प्रतानिन्यां विस्तारेऽपि । व्रियतेऽनया व्रततिः । द्रुगोव्रतचेति (उ० ६५५) अतिः । प्रततेर्जपादित्वात्पस्य वत्वं । वा । स्त्रियां । प्रतानिनी वल्ली तस्यां यथा–धराधरेन्द्रं व्रततीततीरिव । विस्तारे यथा–वात्या संवेगविष्वग्व्रततिबलयित-स्फीतधूमाधिवास । अथ वापितं । बीजाकृते मुंडिते च । वाप्यते स्म वाच्यलिंगः । बीजाकृतं उप्तबीजं । द्वयोर्यथा–सुक्षेत्रमिव नो कस्य प्रीतये वापितं शिरः । व्याघातो योगविघ्नयोः । घ्नते व्याहन्यतेऽनेन व्याहननं वा व्याघातः । योगे यथा–नवव्याघात-

१ मु०। विस्तारे वहतुः पथि । वृषभे वहतिर्धेन्वा सचिवेऽप्यथ वापितम् ॥



**घातेऽथ व्यायतं दीर्घव्यापृतेऽतिशये दृढे ।**
**वासन्तः परपुष्टे स्यात्करभेऽवहिते विटे ॥२८५॥**
**वासन्ती माधवीयूथीपाटलास्वथ वासितम् ।**
**वस्त्रच्छन्ने ज्ञानमात्रे *भावितेऽप्यथ वासिता ॥२८६॥**
**स्त्रीकरिण्योः विवस्वांस्तु देवसूर्ये विश्रुतं ।**
**ज्ञाते हृष्टे प्रतीते च विदितं बुधिते श्रुते ॥२८७॥**

वज्रयोः । विघ्ने यथा–कार्यव्याघातजातं हरतु गणपतिः । ॥२८४॥ घाते यथा – व्याघ्रव्याघातजर्जरः । अथ व्यायतं दीर्घव्यापृतेऽतिशये दृढे । व्यायच्छते स्म व्यायतं । वाच्यलिंगः। अतिशेते अतिशयः । अतिशयवानित्यर्थः । दीर्घे दृढे च यथा–युवायुगव्याहतबाहुरंसलः । शेषयोर्यथा–प्रान्तव्यायतदीर्घलोचन-दलैः । वासन्तः परपुष्टे स्यात्करभेऽवहिते विटे। वसन्ते भवा वासंतः भर्त्तुसंध्यादेरण् (६।३।८९)। अवहितः सावधानः । तत्र वाच्यलिंगः । सर्वेषु यथा–वासन्तैर्भासितं वनम् ॥२८५॥ वासन्ती माधवीयूथीपाटलासु । वसन्ते पुष्यति वासन्ती । ऋत्वण् (६।४।१२५) अणन्तत्वाङ्ङीः । सर्वाः कुसुमलताः । अथ वासितं । वस्त्रच्छन्ने ज्ञानमात्रे भाविते़ऽपि। वास्यते स्म वासितं । वस्त्रच्छन्नभावितयोर्वाच्यलिंगः । वस्त्रच्छन्ने यथा–चीनांशुकैर्वासितहर्म्यगर्भे । ज्ञानमात्रे यथा–वासितं पादपेष्वपि । भाविते यथा-तस्यास्तित्तैर्वनगजमदैर्वासितं वान्तदृष्टिः । अथ वासिता ॥२८६॥ स्त्रीकरिण्योः । द्वयोर्यथा–एताः श्रृंगारितांग्यः करकमलजुषो वासिताः संचरन्ति । विविस्वांस्तु देवे सूर्ये ।

* मु० भाविते विहगारवे। वासिता करिणीनार्योर्विहितं तु कृते श्रुते ॥ विदितं स्वीकृते ज्ञाते विवस्वान् देवसूर्ययोः ।

**विगतो निष्प्रभे वीते विविक्तो वसुनंदके ।**
**विविक्तं स्यादसंपृक्ते रहःपूतविवेकिषु ।।२८८।।**
**विधुतं कंपिते त्यक्ते विकृतो रोग्यसंस्कृतः ।**
**बीभत्सश्च विनीतस्तु निभृते निर्जितेन्द्रिये ।।२८९।।**

विवस्तेजोऽस्त्यस्य विवस्वान् । देवे यथा – विवस्वंतः स्वांते भयमुपययुस्तस्य वचसा । सूर्ये यथा–अधोविवस्वान् परिवर्त्तमानः। अथ विश्रुतं । ज्ञाते हृष्टे प्रतीते च । विश्रूयते स्म विश्रुतं । वाच्यलिंगः । ज्ञातमेकेनापि । प्रतीतं सर्वप्रसिद्धं । तयोर्यथा–रामोऽसौ भुवनेषु विश्रुतगुणः । विदितं बुधिते श्रुते । विद्यते विदितं । वाच्यलिंगः । द्वयोर्यथा–ननु जनविदितैर्भवद्वचलीकैश्चिरपरिपूरितमेवकर्णयुग्मम् ।।२८७।। विगतो निष्प्रभे वीते । विगच्छति स्म विगतः । वाच्यलिंगः विशेषण इतं गतं वीतं द्वयोर्यथा–विगततिमिरपंकं दश्यति व्योमयावत् । विविक्तो वसुनंदके । विविच्यते स्म विविक्तः । वसुनंदकः स्फुरकः । विविक्तं स्यादसंपृक्ते रहःपूतविवेकिषु । वाच्यलिंगः । असंपृक्ते पूते च यथा–प्रसन्नदिक्पांसु विविक्तवातम् । रहसि एकान्ते यथा–विविक्तं स्थानमाश्रयेत् । विवेकिनि यथा–विविक्तो धर्मतत्परः ।।२८८।। विधुतं कंपिते त्यक्ते । धुगृ कंपने । मतान्तरेण ह्रस्वांतः । विधूयते स्म विधुतः । वाच्यलिंगः । कंपिते यथा–कोपेन विधुताधरः । त्यक्ते यथा–रहसि विधुतवस्त्रा कान्तमालिंगति स्त्री । विकृतो रोग्यसंस्कृतः । बीभत्सश्च । विकुरुते स्म विकृतः । वाच्यलिंगः । रोगिणि यथा–हा हा क्षणादिदमभूद्विकृतं शरीरं । असंस्कृते यथा–विकृतवचनो मूर्खः कस्य प्रयाति न हास्यतां । बीभत्से यथा–कीचकास्त्रेण भीमोऽयं समन्ताद्विकृतः



**वणिजे साधुवाह्यश्वे विनयग्राहिते हृते ।**
**विनतः प्रणते भुग्ने विनता पिटकाभिदि ।।२९०।।**
**सुपर्णायां विहस्तस्तु विह्वले पंडकेऽपि च ।**
**विश्वस्तः कृतविश्वासे विश्वस्ता विधवस्त्रियाम् ।।२९१।।**

कृतः । विनीतस्तु निभृते निर्जितेन्द्रिये वाणिजे (ज्ये) साधुवाह्यश्वे विनयग्राहिते हृते । विनीयते स्म विनीतः । षट्स्वर्थेषु वणिजे साधुवाह्यश्वे च पुंसि । शेषेषु वाच्यलिंगः । निभृते यथा–उपस्थितं प्रांजलिना विनीतेन गरुत्मता । निर्जितेन्द्रिये वाणिजे च यथा–विनीतजनविभ्राजिगर्भा सा नगरी बभौ ।।२८९।। साधुवाह्यश्वे यथा–वनायुजैर्विनीतैस्तैः। विनयग्राहिते यथा–नीतौ विनीतैरवरोधरक्षैः । हृते अपनीते यथा–विनीतमोहोमृदुभिर्वनानिलैः। विनतः प्रणते भुग्ने । विनमति स्म विनतः । वाच्यलिंगः । प्रणते यथा–विनतवनिताचूडारत्नप्रभारुणितांघ्रिभिः । भुग्ने यथा–भ्रूभारविनतगात्रः । विनता पिटकाभिदि । सुपर्णायां । पिटका भाजनविशेषः ।।२९०।। सुपर्णा गरुडमाता । तत्र यथा– वैनतेय इव विनतानंदनः । विहस्तस्तु विह्वले पंडकेऽपि च । विगतौ हस्तावस्य विहस्तः। विहसति वा दम्यमिति तः। विह्वले वाच्यलिंगः। तत्र यथा–रामापरित्राणविहस्तयोधम् । पंडकः षंढः । विश्वस्तः कृतविश्वासे । विश्वसिति स्म विश्वस्तः । वाच्यलिंगः । विश्वस्ता विधवस्त्रियां । कृतविश्वासे विधवस्त्रियां च यथा–सुचिरं स हसर्वसात्वतैर्भवविश्वस्तविलासिनीजनः । विजातो विकृते जाते । विजायते स्म विजातः । वाच्यलिंगः । द्वयोर्यथा–विजातजाती कुसुमावतंसा । विजाता तु प्रसूतिका । यथा–विजाताजात्यपुत्रकं । विवर्त्तो नर्तने संघेऽपा-
१७ वृत्तो । विवर्त्तनं विवर्तः । नर्तनं नृत्तं । संघः समुदायः ।

विजातो विकृते जाते विजाता तु प्रसूतिका ।
विवर्त्तो नर्तने संघेऽपावृतौ विकृती रुजि ॥२९२॥
डिंबे विकारमद्यादौ विपतिर्यातनापदोः ।
विच्छित्तिः स्यादंगरागे हावविच्छेदयोरपि ॥२९३॥
विधाता द्रुहिणे कामे विनेता देशके नृपे ।
वृतांतस्तु प्रकरणे कात्स्र्न्ये वार्त्ताप्रकारयोः ॥२९४॥

अपावृत्तिरपावर्त्तनं । तत्र यथा–अहो दशास्यस्य दशाविवर्त्तः । विकृती रुजि । डिंबे विकारमद्यादौ । विक्रियतेऽनया विकरणं वा विकृतिः । स्त्रियां । चतुर्ष्वर्थेषु ॥२९२॥ डिंबो विप्लवः । विकारे यथा – मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः । मद्यादयो मद्यमांसनवनीतमधुदुग्धदधिघृततैलपक्वान्न-गुडरूपा दश । तत्र यथा–कषायप्रध्वंसाद्विकृतिपरिहारव्रतमिदम् । विपत्तियातनापदोः । विपद्यतेऽनया विपदनं वा विपत्तिः । यातना नारकीव्यथा । आपदि यथा– संपत्तौ च विपत्तौ च महतामेकरूपता । विच्छित्तिः स्यादंगरागे हावविच्छेदयोरपि । विच्छिद्यतेऽनया विच्छेदनं वा विच्छित्तिः । अंगरागे हावे च यथा – नवनवविच्छित्तिभूषितैरंगैः । विच्छेदे यथा–न भाति दानविच्छित्तिः प्रभूणां दन्तिनामिव ॥२९३॥ विधाता द्रुहिणे कामे । विधत्ते विधाता । द्वयोर्यथा–अकिंचित्कुर्वाणाः पशव इव तस्यां वयमहो विधातुर्वामत्वाद्विपदि परिवर्त्तामह इमे ;। विनेता देशके नृपे । विनयति विनेता । देशकः शिक्षयिता । तत्र वाच्यलिंगः । द्वयोर्यथा–त्रिभुवनविनेता रघुपतिः । वृत्तान्तस्तु प्रकरणे कात्स्र्न्ये वार्ताप्रकारयोः । वृत्तोऽन्तोऽस्य वृतस्यांत इति वृतांतः । प्रकरणे प्रस्तावे यथा – वृत्तांतागतमेतत्ते कथ-



वृहती क्षुद्रवार्ताक्यां छन्दोवसानभेदयोः ।
महत्यां वाचि वार्द्धान्यां वेल्लितं कुटिले धृते ॥२९५॥
प्लुते वेष्टितं लासके रुद्धे स्त्रीकरणान्तरे ।
शकुंतो विहगे भासे श्रीपतिर्विष्णुभूपयोः ॥२९६॥
शुद्धान्तः स्याद्रहःकक्षान्तरे राज्ञोऽवरोधने ।
संख्यावान्मितसुधियोः सरस्वानुदधौ नदे ॥२९७॥

यिष्याम्यनन्तरम् । कात्स्न्यँ सामस्त्यं । वार्त्तायां प्रकारे च यथा–किं वृतान्तैः परगृहगतैः ॥२९४॥ वृहती क्षुद्रवार्त्ताक्यां छन्दोवसानभेदयोः । महत्यां वाचि वार्द्धान्यां । वर्हति वृहती । द्रुहि वृहिमहिपृषिभ्यः कतृः (उ० ८८४।) अधातूदृदित इति ङीः । क्षुद्रवार्त्ताकी ओषधिः । दोनवाक्षराजातिः ; यदाह– वृहतीपंक्तिरेव च । वसनभेदो वैकक्ष्यं वाशः । तत्र महत्यां च यथा–वृहतोवृहती श्रेष्टा । वाक् वाणी वार्द्धानी गलंतिका कंटकारिकायामपि । वेल्लितं कुटिले धृते । प्लुते । वेल्लति स्म वेल्लितं । वाच्यलिंगः । त्रिष्वपि यथा–कल्लोलवेल्लित-दृषत्यरुषप्रहारैः ॥२९५॥ वेष्टितं ल(ला)सके रुद्धे स्त्री-करणान्तरे । वेष्ट्यते स्म वेष्टितं । रुद्धे वाच्यलिंगः । लसक ओषधभेदः । रुद्धे यथा – वेष्टितो विषवल्लीभिः कल्पद्रुरिव राजते । स्त्रीणां करणान्तरं वात्स्यायनप्रसिद्धं । शकुंतो विहगे भासे । शक्नोति शकुंतः । शके रुंतः । विहगः सामान्यपक्षी । भासः पक्षिविशेषः । द्वयोर्यथा–क्रीडाशकुंतमिव पंजरभाजमाजौ । श्रीपतिर्विष्णुभूपयोः । श्रियः पतिः श्रीपतिः । विष्णौ यथा– उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ । भूपे यथा–श्रियः पदं श्रीपतिरेव नान्यः ॥२९६॥ शुद्धान्तः स्याद्रहःकक्षान्तरे राज्ञो-ऽवरोधने । शुद्धो रक्षितोंऽतोऽस्य शुद्धान्तः । रहः कक्षान्तार-

**संवर्त्तः प्रलयेऽक्षद्रौ संहतं मिलिते दृढे ।**
**स्खलितं छलिते भ्रेषे संस्कृतं लक्षणान्विते ॥२९८॥**
**भूषिते कृत्रिमे शस्ते संघातो घातसंघयोः ।**
**संहिता वर्णसंयोगे शास्त्रवेदैकदेशयोः ॥२९९॥**

मेकान्तस्थानविशेषः । तत्र यथा – शुद्धान्ते मंत्रणं राज्ञां । अवरोधनं अन्तःपुरम् । तत्र पुंक्लीबः । तत्र यथा–शुद्धान्तरक्ष्या जगदे कुमारी । संख्यावान्मितसुधियोः । संख्या एकत्वादिविचारणा वाऽस्त्यस्य संख्यावान् । द्वयोर्यथा–संख्यावन्तो भवन्ति सत्पुरुषाः । सरस्वानुदधौ नदे । सरः प्रसरणमस्त्यस्य सरस्वान् । द्वयोर्यथा–सरस्वतिपदं चित्तं सरस्वति निधेहि मे ॥२९७॥ संवर्त्तः प्रलयेऽक्षद्रौ । संवृत्यतेऽनेन संवृतः । प्रलये यथा–संवर्त्तशंभुकैवर्त्तः कुरुते विश्वयादसां । अक्षद्रुर्बिभीतकः । तत्र यथा–संवर्त्ते वर्त्तते कलिः । संहतं मिलिते दृढे । संहन्यते स्म संहतं । वाच्यलिंगः। मिलिते यथा–न संहतास्तस्य न भेदवृत्तयः। प्रयाणि वाग्छन्त्यसुभिः समीहितुं । दृढे यथा–संहिताखिलसंधयः। स्खलितं छलिते भ्रेषे । स्खल्यते स्म स्खलनं वा स्खलितं । छलिते वाच्यलिंगः । तत्र यथा–कलिनास्खलितः खलु भ्रेषो यथोचितात् । रूपाद्भ्रंशः । तत्र यथा–स्खलिते स्खलिते वध्य इति चेत्क्रियते मतिः । संस्कृतं लक्षणान्विते । भूषिते कृत्रिमे शस्ते । संस्क्रियते स्म संस्कृतं । वाच्यलिंगः । लक्षणेन प्रकृतिप्रत्ययविभागेन अन्वितं लक्षणान्वितम् । तत्र क्लीबे इत्येके । कृत्रिममुत्पाद्यं । तयोर्यथा – स्वादयन्रसमनेकसंस्कृतप्राकृतैरकृतपात्रसंकरैः । भावशुद्धिविहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ॥२९८॥ भूषिते यथा–मस्कुरीवल्कसंस्कृतः । शस्ते यथा – शुष्मणि प्रणयिनाभिसंस्कृतैर्हवींषि जुहवांबभूविरे ।



**स्थपतिः सौविदेऽधीशे बृहस्पतीष्टयज्वनि ।**
**कारुके च संततिस्तु तनये दुहितर्यपि ॥३००॥**
**परंपराभवे पंक्तौ गोत्रविस्तारयोरपि ।**
**संनतिः प्रणतिध्वन्योः संगतिर्ज्ञानसंगयोः ॥३०१॥**

संघातो घातसंघयोः । संहननं संघातः । घाते यथा–खड्गसंघातपातितः । संघे यथा–योधसंघातभीतः । संहिता वर्णसंयोगे शास्त्रवेदैकदेशयोः । संधीयते स्म संहिता । क्ते धाग इत्यनेन हिरादेशः । वर्णानामकारादीनां संयोगः संधिः । तत्र यथा–संहितैकपदे नित्या नित्या धातूपसर्गयोः । शास्त्रैकदेशे यथा–ईशानसंहिता । वेदैकदेशे यथा–शाकल्यसंहितामनुप्रावर्षत्पर्जन्यः ॥२९९॥ स्थपतिः सौविदेऽधीशे बृहस्पतीष्टयज्वनि । कारुके च । स्थापयति स्थपतिः । खल्यमीति (उ० ६५३) उपलक्षणादतिः। पृषोदरादित्वाद्ध्रस्वः । अधीशः स्वामी । तत्र वाच्यलिंगः । सौविदः कंचुकी । तत्र यथा–स्थपतिनिपतकक्ष्ये को विशेद्राजहर्म्ये । बृहस्पतोष्टिरिष्टिविशेषो बाजपेययागानंतरं क्रियते तस्यायो यज्वा तत्र । कारुकस्तक्षा । तत्र अधोशे च यथा–जगत्त्रयैकस्थपतिस्त्वमुच्चकैः । संततिस्तु तनये दुहितर्यपि । परंपराभवे पंक्तौ गोत्रविस्तारयोरपि । संतन्यते संततिः। स्त्रियां क्तिः । तनये यथा–संततिः शुद्धवंश्या हि परत्रेह च शर्म्मणे । दुहतरि यथा–पायाद्वो दधदर्द्धाङ्गे तुहिनाचलसंततिम् ॥३००॥ परंपराभवे यथा–चिंतासंततितंतुजालनिबिडस्यूतेवलग्नाप्रिया । पंक्तौ यथा–पश्यैतां तरुसंतति कुसुमितां संतापतापच्छिदम् । गोत्रे यथा–रघुरिक्ष्वाकुसंततिः। विस्तारे यथा–अंतको ध्वांतसंततेः। संनतिः प्रणतिध्वन्योः । संनमनं संनतिः। प्रणतौ यथा–

सम्मतिर्वांच्छानुमत्योः समितिर्युधि संगमे ।
साम्ये सभायामीर्यादौ संवित्तिर्ध्यविवादयोः ॥३०२॥
स्थापितं निश्चिते न्यस्ते स्तिमितौ क्लिन्ननिश्चलौ ।
सिकताः स्युर्वालुकायां सिकता सैकते रुजि ॥३०३॥

हरिराक्रमणेन सनतिं किल बिभृत। भियेत्यसंभवः। ध्वनिः शब्दः। संगतिर्ज्ञानसंगयोः। संगच्छतेऽनया संगमनं वा। संगतिः। स्त्रियां। ज्ञाने यथा—षडंगसंगतिः कस्य। संगे यथा—संगतिः सुजने जने ॥३०१॥ संमतिर्वांच्छानुमत्योः। संमननं संमतिः। स्त्रियां। द्वयोर्यथा—संमतिर्न विमतिर्न योगिनः। समितिर्युधि संगमे। साम्ये सभायामीर्यादौ। संयति अस्यां समदनं वा समितिः। स्त्रियां। युधि संगमे सभायां च यथा—समितौ रभसादुपागतं। सगदः संप्रतिपत्तुमर्हसि। ईर्या आदिर्यस्यासौ ईर्यादिः। यदाह—ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञकाः। पंचाहुः समितीः। तत्र साम्ये च यथा—शमिनां समितिः श्रेष्ठा। संवित्तिर्ध्यविवादयोः। सम्यक् वदनं संवित्तिः। धीर्बुद्धिस्तत्र यथा—विकल्पैर्मोहितं विश्वं निजसंवित्तिकल्पितैः। अविवादे यथा—संवित्तिरुभयोरपि ॥३०२॥ स्थापितं निश्चिते न्यस्ते। स्थाप्यते स्म स्थापितं। वाच्यलिंगः। निश्चिते यथा—प्रमेयः स्थापितो येन। न्यस्ते यथा—वक्षः स्थापितकौस्तुभः। स्तिमितौ क्लिन्ननिश्चलौ। स्तिम्यते स्म स्तिम्यति वा स्तिमितः। वाच्यलिंगः। क्लिन्ने यथा—अंभोदांतः स्तिमितवसना। निश्चले यथा—ध्यानस्तिमितलोचनः। सिकताः स्युर्वालुकायां। सिकिः सौत्रः सिक्यंते स्म सिकताः। पृषिरंजोति (उ० २०८) किदतः। प्रायेण स्त्रीभूम्नि यथा—रसिकतासिकतास्त्रिव दुर्धियाम्। सिकता



सुकृतं तु शुभे पुण्ये सुविधानेऽथ सुव्रता।
सुखदोह्यसौरभेय्यां सुव्रतोऽर्हति सुद्व्रते ॥३०४॥
सुनीतिर्ध्रुवमाता स्यात्सुनयोरप्यथ *सूनृतं।
मंगले प्रियसत्योक्तौ हसन्ती शाकिनीभिदि ॥३०५॥

सैकते रुजि। सैकतं तटं तत्र उपचारात् सिकताशब्दः। रुक् रोगविशेषः। शर्करायामपि ॥३०३॥ सुकृतं तु शुभे पुण्ये सुविधाने। सुष्ठु क्रियते स्म सुकृतं। शोभनं कृतं वा। शुभं क्षेमं। पुण्यं श्रेयः। शोभनं विधानं यस्य सुविधानं। सुविहितमित्यर्थः। तत्र वाच्यलिंगः। शुभे यथा—देवस्तनोतु नम्राणां सुकृतं पुण्यशालिनाम्। पुण्ये सुविधाने च यथा—सुकृतं दुष्कृतं चैव पुरुषस्य समं व्रजेत्। अथ सुव्रता सुखदोह्यसौरभेय्यां। शोभनं व्रतमस्याः सुव्रता। सुखेन दोह्यते सुदोह्या सा चासौ सौरभेयी गौश्च सुखदोह्यसौरभेयी। तस्यां यथा—सुव्रता केन नो वृता। सुव्रतोऽर्हति सद्व्रते। अर्हन् विंशस्तीर्थकरः। तत्र यथा—वंदे सुव्रतनेमिनौ। सद्व्रते वाच्यलिंगः। तत्र यथा—वरं वरय सुव्रत ॥३०४॥ सुनोतिर्ध्रुवमाता स्यात्सुनयोरपि। सुष्ठु नीयते सुनयनं वा सुनीतिः। शोभना नीतिरस्येति वा सुनीतिः। ध्रुवस्य औत्तानपादेर्माता ध्रुवमाता। शोभनो नयः सुनयः। अनयोरर्थयोः स्त्रियां। शोभनो नयोऽस्येति वा सुनयः। अस्मिन् पक्षे सुनीति शब्दो वाच्यलिंगः। ध्रुवमातरि यथा—सुनीतिः सुषुवे ध्रुवं। सुनये यथा—सुनीतिः श्लाघ्यते न कैः। अथ सूनृतं। मंगले प्रियसत्योक्तौ। सुष्ठु ऊन्यते सून्। सून् च तत् ऋतं

*मू० स्यात्सुनया सुरतं पुनः। मोहने सुरता देवभावे च सुहितं पुनः। तप्ता भुक्ते सुष्ठुहिते सुनृतं। प्रियसत्यवाक्।

मल्लिकांगारधान्योश्च हारितो विहगान्तरे ।
मुनौ छद्मन्यथाश्वत्थः पिप्पले गर्दभांडे ॥३०६॥
अश्वत्थेषपौर्णमास्यामतिथिः कुशनंदने ।
*कृध्यागंतावथोपस्थः पायुमेढ्रांकयोनिषु ॥३०७॥

च सूनृतं । मंगलं कल्याणं तत्र धर्ममात्रे क्लीबे तद्वति प्रियसत्योक्तौ च वाच्यलिंगः । द्वयोर्यथा—सूनुः सूनृतवाक् स्रष्टुर्विससर्जो जितश्रियम् । हसन्ती शाकिनीभिदि मल्लिकांगारधान्योश्च । हसति हसंती ॥३०५॥ मल्लिका दीपवर्त्याधारः । अंगारधानी अंगारशकटी । तत्र यथा—शीतं निर्गमयंत्येते हसन्ती प्रांतवर्तिनः। हारीतो विहगान्तरे । मुनौ छद्मनि । हरति हारीतः । हृग् ईतण् । विहगान्तरे यथा—मरिचोद्भ्रान्तहारीतामलयाद्रेरूपत्यका । मुनौ मुनिविशेषे यथा—हारीतगर्ग्यैगिरिशं स्तुवंति । छद्म कैतवं तत्र यथा—हारीतेन हरन्ति हन्त जनताचित्तानि वित्तेषिणः । अथ थान्ताः । अथाश्वत्थः पिप्पले गर्दभांण्डे । अश्व इव तिष्ठति अश्वत्थः । पृषोदरादित्वाद् द्वावपि वृक्षौ । तयोर्यथा—वनं तदश्वत्थकपित्थसंकुलम् ॥३०६॥ अश्वत्थेषपौर्णमास्यां । अश्वत्थेन चन्द्रयुक्तेन युक्ता पौर्णमासी अश्वत्था । श्रवणाश्वत्थान्नाम्न्य इति अप्रत्ययः । ईषस्य आश्विनस्य पौर्णमासी । तत्र यथा—अश्वत्थायां वितन्वंति पुरन्दरमहोत्सवम् । अतिथिः कुशनंदने । कृध्यागंतौ । अतति अतिथिः। अतेरिथिः। अथोपस्थः पायुमेढ्रांकयोनिषु । उपतिष्ठते उपस्थः । पायुर्गुदः । मेढ्रं पुंश्चिह्नं । अंक उत्संगः । योनिः स्त्रीचिह्नं । सर्वेषु यथा—

*मु० कृध्यागन्तावव्यथस्तु व्यथाहोने च पन्नगे। अव्यथा तु हरीतक्यामुपस्थो योनिलिङ्गयो ॥ उत्सङ्गगुदयोश्चापि समीपस्थितवत्यपि ।





उन्माथो मारणे कूटयंत्रसंघातयोरपि ।
०क्षवथुः काशे छिक्कायां कायस्थोऽक्षरजीवकः ॥३०८॥
परमात्मा च कायस्था हरीतक्यामलक्यपि ।
*दमथो दमने दंडे निर्ग्रंथो निस्वमूर्खयोः ॥३०९॥
श्रमणे च निशीथस्तु रात्रिमात्रार्द्धरात्रयोः ।
प्रमथः शंकरगणे प्रमथा तु हरीतकी ॥३१०॥

उपस्थसंस्थापितपाणिपल्लवः ॥३०७॥ उन्माथो मारणे कूटयंत्रघातकयोरपि । उन्मथनं ऊर्ध्वपातान्मथ्यतेऽनेन वा उन्माथः। उन्मथति वा बाहुलकादुपसर्गादपि ज्वलादित्वाण्णः । मारणे यथा—प्रत्यर्थिपार्थिवोन्माथः । कूटयंत्रे यथा—उन्मादबद्धगात्रस्य मृगस्येव विचेष्टितम् । घातको हंता । तत्र वाच्यलिंगः। मंखस्तु कूटयंत्रकमुन्माथं न स्त्रीनावधघातयोः इत्याह । क्षवथुः काशे छिक्कायां । क्षवणं क्षवथुः । द्वितोऽथुरिति अथुः । पुंसि । द्वयोर्यथा—अभीक्ष्णक्षवथूद्गारसंतापाचांतविग्रहः। कायस्थोऽक्षरजोवकः। परमात्मा च । काये तिष्ठति कायस्थः। अक्षरजोवके यथा—कायस्थेनोदरस्थेन मातुर्मांसं न भक्षितम् ॥३०८॥ परमात्मनि यथा—कायस्थोऽपि न कायस्थः। कायस्थोऽपि न दृश्यते। कायस्था हरीतक्यामलक्यपि । हरीतक्यामलक्यौ वृक्षौ । दमथो दमने दंडे । दमनं दाम्यंत्यनेन वा दमथः । भृशीशपीति बहुवचनादथः । दंडश्चतुर्थ उपायः । निर्ग्रंथो निस्वमूर्खयोः । श्रमणे च । निर्गतो ग्रंथो द्रव्यं शास्त्रं वाऽस्य निर्ग्रंथः । निस्वमूर्खयोर्वाच्यलिंगः । त्रिष्वपि यथा—निर्ग्रंथो हस्यते विटैः ॥३०९॥ निशीथस्तु रात्रिमात्रार्द्धरात्रयोः । नितरां शेरते प्राणिनोऽत्रेति निशीथः ।

० मु० उद्रथस्ताम्रचूडे स्यान्महेन्द्रमहाकामुके। क्षवथु०।
* मु० गोग्रन्थिस्तु करीषे स्याद्गोष्ठे गोजिह्विकौषधौ०।

**मन्मथः कामचिंतायां पुष्पचापकपित्थयोः ।**
**रुदथः कुकुटशुनोः वंचथः पिककालयोः ।।३११।।**

**वरूथं तु तनुत्राणे रथगोपनवेश्मनोः ।**
**वयस्थो मध्यमवयाः वयःस्था शाल्मलिद्रुमे ।।३१२।।**

---

न्युद्भ्यां शीङ इति कित्थः । रात्रिमात्रे यथा– निशीथदीपाः सहसाहतत्विषो बभूवुरालेख्यसमर्पिता इव । अर्द्धरात्रे यथा– क्व प्रस्थितासि करभोरुघने निशीथे । प्रमथः शंकरगणे । प्रमथति प्रमथः। यथा–प्रथमः प्रमथेषु यः। प्रमथा तु हरीतकी । हरीतकी पथ्या ।।३१०।। मन्मथः कामचिंतायां पुष्पचापकपित्थयोः । मनो मथ्नाति मन्मथः । पृषोदरादित्वात्साधुः । मथति चित्तं रागिणामिति वा। क्मिमथिभ्यां चेति साधुः। कामचिंतायां यथा–तमथ मन्मथमन्मतभाषिणः । पुष्पचापे यथा–मधुर्नृणां मन्मथसाहचर्यादसावनुक्तोऽपि सहाय एव । कपित्थो वृक्षः । रुदथः कुक्कुटशुनोः । रोदिति रुदथः। विदि भिदीति किदथः। बंचथः पिककालयोः । वंचति वंचथः। भृशीशपीत्यथः । (उ० २३२) ।।३११।। वरूथं तु तनुत्राणे रथगोपनवेश्मनोः । वृणाति वरूथं । भृवृभ्यामूथः । रथगोपने पुंक्लीबः । तनुत्राणे कवचे यथा–वरूथमिव पाथोर्देदिननाथस्य निर्ममे । रथगोपने यथा–अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः । वेश्म गृहं । वयःस्थो मध्यमवयाः। वयसि यौवने तिष्ठति वयःस्थः । वाच्यलिंगः । तत्र यथा–एते वयःस्थाः स्थपुटेऽपि मार्गे- वयःस्था शाल्मलिद्रुमे । ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीषु च । वयांसि तिष्ठंत्यत्रेति वयसे तिष्ठति इति वा वयःस्था



**ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकोषु च ।**
**वमथुर्वमने काशे गजस्य करसीकरे ।।३१३।।**
**विदथो योगिनि प्राज्ञे शमथः सचिवे शमे ।**
**शपथः कार आक्रोशे शपने च सुतादिभिः ।।३१४।।**
**शयथः स्यादजगरे निद्रालौ मरणेऽपि च ।**
**षड्ग्रंथः करंजभेदे षड्ग्रंथा तु वचा शढो ।।३१५।।**
**समर्थः शक्तिसंपन्ने संबद्धार्थिहितेऽपि च ।**
**सिद्धार्थः सर्षपे शाक्यसिंहेऽन्त्यजिनवप्तरि ।।३१६।।**

---

षडपि वनस्पतिभेदाः ।।३१२।। वमथुर्वमने काशे गजस्य करसीकरे । वमनं वम्यतेऽसाविति वा वमथुः। द्वितोऽथुरित्यथुः। पुंसि । वमनं वांतिः । काशः क्षवथुः । गजस्य करसीकरे यथा–उद्भ्रांतो दंडशुंडो दुमरवमथु(दंडो दुमरवः मधु)भिव्योंमताराकरालम् ।।३१३।। विदथो योगिनि प्राज्ञे । वेत्ति विदथः । विदिभिदीति किदथः । वाच्यलिंगः। शमथः सचिवे शमे । शाम्यति शमनं वा शमथः। भृशिशपीति (उ० २३२) अथः। शपथः कार आक्रोशे शपने च सुतादिभिः । शपनं शपथः। भृशिशपीत्यथः । कारः क्रिया। आक्रोशो गालिदानं। सुतादिभिः शपनं सुतादिशरीरस्पर्शः । त्रिष्वपि यथा–न वृथा शपथं कुर्यादल्पेऽप्यर्थे नरो बुधः ।।३१४।। शयथः स्यादजगरे निद्रालौ मरणेऽपि च । शेते शयनं वा शयथः भृशिशपीत्यथः। निद्रालौ वाच्यलिंगः। षड्ग्रंथः करंजभेदे। षड्ग्रंथयोऽस्य षट्ग्रंथः। पृषोदरादित्वात् साधुः । करंजो वृक्षः। तस्य भेदः। षट्ग्रंथा तु वचा शढी । द्वेऽपि ओषधी ।।३१५।। समर्थः शक्तिसंपन्ने संवद्धार्थिहितेऽपि च । समर्थयते समर्थ्यते संगतोऽर्थोऽस्येति वा

अर्बुदः पर्वते मांसकीलके दशकोटिषु ।
अर्द्धेन्दुः स्यादतिप्रौढस्त्रीगुह्यांगुलियोजने ।।३१७।।
गलहस्ते नखांकेऽर्धचन्द्रेऽगदस्तु वालिजे ।
अंगदं तु केयूरे स्यादंगदा याम्यदिग्गजो ।।३१८।।

समर्थः । वाच्यलिंगः । शक्तिसंपन्ने यथा—कोऽतिभारः समर्थानां ।
सम्बद्धार्थे हिते च यथा—तथा समर्थां गिरमूचिवांसं प्रत्याह
देवानुचरं दिलीपः। सिद्धार्थः सर्षपे शाक्यसिंहेऽन्त्यजिनवप्तरि ।
सिद्धोऽर्थोऽस्य सिद्धार्थः । शाक्यसिंहो बुद्धविशेषः। तत्र
सर्षपे च यथा—सिद्धार्थता स्फुरति तावदियं स्फुटैव सद्वृत्तता
भवति सर्षपयावदेव । अन्त्यजिनो महावीरस्तस्य वप्ता
जनकस्तत्र यथा — सिद्धार्थपार्थिवसुतः सुकृताय वीरः ।।३१६।।
अथ दान्ताः। अर्बुदः पर्वते मांसकीलके दशकोटिषु । अर्वति
अर्बुदः । इंग्यर्विभ्यामुदः । पर्वते पुंसि । शेषयोः पुंक्लीबः ।
पर्वतविशेषे यथा—अत्याश्चर्यनिधानमर्बुद इति ख्यातो गिरिः ।
मांसकीलोऽक्षरोगविशेषः । तत्र यथा—चक्षुश्चर्वितमर्बुदैः । दश-
संख्याकोटयो दशकोटयः । यदाह—प्रयुतं कोटिमथार्बुदमिति ।
अर्द्धेन्दुः स्यादतिप्रौढस्त्रीगुह्यांगुलियोजने । गलहस्ते नखांकेऽर्ध-
चन्द्रे । इन्दोरर्द्धं अर्द्धेन्दुस्तत्सदृशत्वादर्द्धेन्दुः । समेंऽशे अर्द्धं न
केति समासः । अर्द्धं इन्दोरिति असमांऽशे तु जरत्यादिभिरिति
समासः । अतिप्रौढस्त्रीगुह्यांगुलियोजनं वात्सायनप्रसिद्धं ।।३१७।।
गलहस्ते नखांके च यथा—अर्द्धेन्दुस्तेन मे दत्तस्तेनाहं सखि
विह्वला । अर्द्धचंद्रे यथा—तत्र व्यक्तं दृषदि चरणन्यासमर्द्धेन्दु-
मूलेः । अंगदस्तु वालिजे । अंगं ददाति द्यति वा अंगदः ।
वालिजो वालिपुत्रस्तत्र यथा—तदात्मज इहांगदः प्रहित एष



आस्पदं कृत्यपदयोरामोदो गंधहर्षयोः ।
आक्रंदो दारुणे रणे सारावरूदिते नृपे ।।३१९।।
क्षणदं तोये क्षणदो गणके क्षणदा निशि ।
कपर्द्दः पार्वतीभर्तुर्जटाजूटे वराटके ।।३२०।।

सौमित्रिणा । अंगदं तु केयूरे स्यात् । केयूरं बाहुभूषणे यथा—
ऐरावतास्फ़ालनविश्लथं यः संघट्टयन्नंगदमंगदेन । अंगदा याम्यदि-
ग्गजो । दक्षिणदिक्वारणस्य वामनस्य पत्नी ।।३१८।। आस्पदं
कृत्यपदयोः । आसमन्ततपदं आस्पदं । वर्च्चस्कादित्वात् ।
कृत्यं कार्यं । पदे स्थाने यथा— निसर्गभिन्नास्पदमेकसं-
स्थमस्मिन्द्वयं श्रीश्च सरस्वती च । आमोदो गंधहर्षयोः ।
आमोदते आमोदनं वा आमोदः । द्वयोर्यथा— सांद्रामोदे
हृदयकमले भृंगतामेति भक्तिः । आक्रंदो दारुणे रणे
सारावरुदिते नृपे। आक्रन्दंति अत्रेति आक्रन्दनं आक्रन्द-
यति वा आक्रंदः । दारुणे रणे यथा— आक्रंदे महति जहर्ष
वीरवर्गः । सारावे सशब्दे रूदिते यथा—उदितरुदिताक्रंदं क्वापि
क्वचित्कलगीतिकम् । नृपः पार्ष्णिग्राहाक्रांतस्य विजिगीषो
रक्षिता । तत्र यथा—आक्रंदसंदीपितजैत्रयात्राः ।।३१९।। क्षण-
तोये । क्षणं ददाति क्षणदं । तोयं नीरं । क्षणदो गणके
गणको मौहूर्त्तिकः । क्षणदा निशि । यथा—आरुह्य नार्यः क्षणदा-
यस्यां नभोगता देव्य इव व्यराजन् । कपर्द्दः पार्वतीभर्त्तुर्जटाजू-
वराटके। कंशिरः पिपर्त्ति कपर्द्दः । शा शपीति (उ० २३७
बहुवचनाद्दः । के जले पर्द्दते वा । पार्वतीभर्तुर्महेश्वरस्य जटाजू-
यथा—कपर्दे कूर्दते यस्य जाह्नवी वीचिहस्तकैः । वराटके यथा
प्राप्ता काणकर्पदिकापि न मया तृष्णेऽधुना मुंच माम् । अ

कर्णांदुः स्यात्कर्णपाश्युत्क्षिप्तिका कुमुदः कपौ ।
दिग्नागनागयोर्दैत्यविशेषे च सितोत्पले ।।३२१।।
कुमुदा कुंभीगंभार्योः कुसीदं वृद्धिजीवने ।
वृद्धचा जीवे कौमुदस्तु कार्तिके कौमुदीन्दुभा ।।३२२।।

ह्रस्वः कपर्द्दः कपर्द्दिका ।।३२०।। कर्णांदुः स्यात्कर्णपाश्युत्क्षिप्तिका । कर्णमंदति कर्णांदुः । भृ सृ तृ त्सरीति बहुवचनादुः । स्त्रियां । कर्णपाशी कर्णलालिका । उत्क्षिप्तिका कर्णाभरणं । द्वयोर्यथा–सुवर्णकर्णांदुविलोलकर्णा । कुमुदः कपौ । दिग्नागनागयोर्दैत्यविशेषे च सितोत्पले । कौ पृथिव्यां कुत्सितं वा मोदते कुमुदः । मूलविभुजादित्वात्कः । काम्यते वा कुमुदबुदबुदादय इति साधुः । सितोत्पले पुंक्लीबः । अन्यत्र पुंसि । कपौ सितोत्पले च यथा–कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्वला । दिग्नागे यथा–वामनः कुमुदोंजनः । नागः सर्पविशेषः । तत्र यथा–नागेन लौल्यात्कुमुदेन नूनमुपातमंतर्ह्रदवर्तिना तत् । दैत्यविशेषे यथा–जिगाय दैत्यं कुमुदं मुकुंदः ।।३२१।। कुमुदा कुंभीगंभार्योः । द्वेऽपि ओषधी । कुसीदं वृद्धिजीवने । वृद्धचा जीवे । कुस् च श्लेषे दंत्यांतः । कुस्यति कुसीदं । कुसेरिदेदाविति कदोद्वः । वृद्धचा जीवे वाच्यलिंगः । वृद्धिजीवने यथा–कुसीदकृषिबाणिज्यैर्वैश्यवृत्तिरुदाहृता । वृद्धचा जीवे यथा–कुसीदे नास्ति दाक्षिण्यं सलोभे नास्ति सौहृदम् । दुर्जने नास्ति विश्वासो दारिद्र्ये नास्ति भोजनम् । कौमुदस्तु कार्त्तिके । कौमुद्यः संत्यत्र कौमुदः । अभ्रादित्वादः । यथा–मोदंते कौमुदे मासि गावः । नावकसंकुलाः । कौमुदींदुभा । कुमुदानामियं कौमुदी । इंदोर्भा प्रभा तस्यां यथा–शशिना सह याति कौमुदी सह मेघेन



गोविन्दस्तु गवाध्यक्षे वासुदेवे बृहस्पतौ ।
गोष्पदं गोखुरस्वभ्रे गवां च गतिगोचरे ।।३२३।।
जलदो मुस्तके मेघे जीवदो रिपुवैद्ययोः ।
ग्रंथिपर्णे तमोनुत्तु शशिमार्तण्डवह्निषु ।।३२४।।
दारदो विषभेदे स्यात्पारदे हिंगुलेऽपि च ।
दायादो सुतसपिंडौ *धनदो दातृगुह्यकौ ।।३२५।।

तडिद्विलीयते ।।३२२।। गोविन्दस्तु गवाध्यक्षे वासुदेवे बृहस्पतौ । गां विन्दति गोविन्दः । निगवादे नाम्नीति शः । गवाध्यक्षे वासुदेवे च यथा–गोविन्द तासु विहिता भवता यथार्था । बृहस्पतौ यथा–आदिदेश स गोविन्दं दानवोच्छित्तये हरिः । गोष्पदं गोखुरस्वभ्रे गवां च गतिगोचरे । गोः पदं गोष्पदं । वर्चस्कादित्वात्साधुः । गोखुरश्वभ्रे यथा–ववर्ष मेघः किल गोष्पदप्रं । गवां गतिगोचरे यथा–गोष्पदेषु विचरन्नपीयत ।।३२३।। जलदो मुस्तके मेघे । जलं दत्ते जलदः । मुस्तके मेघे नामत्वात् । मेघे यथा–कुतो वारामोघं बत जलद मोघं वितरसि । जीवदो रिपुवैद्ययोः । ग्रंथिपर्णे । जीवं द्यति ददाति वा जीवदः । रिपौ वैद्ये च यथा–आयुश्चेद्रोगिणां न स्याज्जीवदो जीवदस्तदा । ग्रंथिपर्णं गंधद्रव्यं । तमोनुत्तु शशिमार्तण्डवह्निषु । तमोऽधकारं नुदति तमोनुत् । त्रिष्वपि यथा–तमोनुदासंतमसं निरस्तं ।।३२४।। दारदो विषभेदे स्यात्पारदे हिंगुलेऽपि च । दरत्सुदेशे भवो दारदः । त्रिष्वपि यथा–सदारदं मर्द्दयति स्म वार्तिकः । दायादो सुतसपिंडौ । दायं भागमादत्ते दायादः । दश्चाज्ञ इति डः । सुतः पुत्रः । ययोरेकः पूर्वः सप्तमः पुरुषस्तावन्योन्यस्य सपिंडौ । गोत्रिणावित्यर्थः। द्वयोर्यथा–दायादा धनमाह-

*मु० दोहदो गर्भलक्षणे । अभिलाषे तथा गर्भे धनदो० ।

नलदा मांस्यां नलदमुशीरमकरन्दयोः ।
नर्मदा रेवानर्मल्योः निषादः श्वपचे स्वरे ॥३२६॥
निर्वादस्त्यक्तवादेऽपवादे च प्रमदो मुदि* ।
प्रमदा स्त्री प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु ॥३२७॥

रन्ति तरसा यत्नेन संरक्षितम् । धनदो दातृगुह्यकौ । धनं ददाति धनदः । दातरि वाच्यलिंगः । द्वयोर्यथा–धनदोसि धनार्थिनाम् ॥३२५॥ नलदा मांस्यां । नलं द्यति नलदा । अतो ड इति डः । मांसी गंधद्रव्यं । नलदमुशीरमकरन्दयोः । उशीरं वारिणीमूलं । मकरंदो मधु । नर्मदा रेवानर्म्मल्योः । नर्म द्यति–ददाति वा नर्मदा । रेवायां यथा–उद्देशोऽयं सरसकदलिश्रेणिशोभातिशायी । कुंजोत्कर्षां कुरितरमणीविभ्रमो नर्मदायाः। नर्मालि नर्मसखी । निषादः श्वपचे स्वरे । निषीदति निषादः । वा ज्वलादीति णः । निषीदंति स्वरा अत्रेति वा । व्यंजनाद्यञ् । श्वपचे यथा – मा निषाद प्रतिष्ठास्त्वमगमः शास्वती समाः। स्वरे स्वरविशेषे यथा–निषादः सर्वसंधिस्थो ललाटस्थस्तु धैवतः ॥३२६॥ निर्वादस्त्यक्तवादेऽपवादे च । निर्गतो वादोऽस्य निर्वादः। निर्वदनं वा । त्यक्तवादे वाच्यलिंगः। तत्र यथा–निर्वादा वादिनः कृताः । अपवादोऽवर्णवादः । तत्र यथा–खलु निर्वादकथायां वदितायत्खलु जनोऽपि स्यात् । प्रमदो मुदि । प्रमदनं प्रमदः । संमदप्रमोदो हर्ष इत्यल् यथा–सृष्टा सितेन विधिना निधना गुणानाम् । लोकत्रयीं प्रमदकंदमयीं विधातुं । प्रमदा स्त्री । प्रमाद्यति प्रमदा । प्रकृष्टो मदोऽस्या इति वा । यथा–प्रमदाः पतिवर्त्मगाः । इति प्रतिपन्नं हि

*मु० मुदि मत्तके ।



काव्यगुणे प्रह्लादस्तु निनादे दानवान्तरे ।
प्रतिपत्तु संवित्तिथौ प्रासादो राजमंदिरे ॥३२८॥
देवतायतने चापि मर्यादा स्थितिसीमयोः ।
माकंदः स्यात्सहकारे माकन्द्यामलकीफले ॥३२९॥

विचेतनैरपि । प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु । काव्यगुणे । प्रसदनं प्रसीदत्यनेन वा प्रसादः। अनुग्रहे यथा–तव प्रसादात्कुसुमायुधेऽपि । स्वास्थ्ये यथा–गहनमपररात्रप्राप्तबुद्धिप्रसादाः । कवय इव महीपाश्चिन्तयन्त्यर्थजातं । प्रसत्तौ यथा–प्रसादे वर्त्तस्व प्रकटय मुदं संत्यज रूषम् ॥३२७॥ काव्यगुणे यथा–शुष्केंधनाग्निवत् स्वच्छजलवत् सहसैव यः । व्याप्नोत्यन्यत् प्रासादोसौ सर्वत्र विहितस्थितिः। नैर्मल्येऽपि मंखः। यथा–प्रसादमादर्श इवान्तरात्मनि । प्रह्लादस्तु निनादे दानवान्तरे। प्रह्लादनं प्रह्लादते वा प्रह्लादः। दानवविशेषो हिरण्यकशिपोः पुत्रः। प्रतिपत्संवित्तिथौ । प्रतिपदनं प्रतिपद्यते वा प्रतिपत् । स्त्रियां । संविदि यथा–ईति सम्यक्प्रतिपदात्त्वयेंद्रियजयः कृतः । तिथौ यथा–प्रतिपत्पाठशीलस्य विद्येव तनुतां गता । प्रासादो राजमंदिरे । देवतायतने चापि । प्रसीदंति नयनमनांसि अस्मिन्निति प्रासादः। घञ्युपसर्गस्य बहुलमिति दीर्घः। राजमंदिरे यथा–हर्षस्य सप्तभुवनप्रथितोरुकीर्तेः । प्रासादपंक्तिरियमुच्छिखरा विभाति ॥३२८॥ देवतायतने यथा–प्रासादेषु त्रुटितशिखरस्वभ्रलब्धप्रवेशैः। प्रातः प्रातस्तुहिनसलिलैः शार्वरैः स्नापितानि । मर्यादा स्थितिसीमयोः । मर्येति सीमार्थेऽव्ययं । मर्या ददाति मर्यादा । स्थितौ यथा–आर्याः समर्यादमुदाहरन्तु । सीमायां यथा–मर्यादामभिभवन्ति जलनिधयः । माकंदः स्यात्सहकारे । माकन्दी

मुकुंदः पारदे रत्नविशेषे गरुडध्वजे ।
मेनादः केकिनिच्छागे मार्जारे वरदः पुनः ॥३३०॥
प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका ।
विशदः पांडुरे व्यक्ते शारदो वत्सरे नवे ॥३३१॥
शरद्भवे पीतमुद्गरशालिनेऽप्यथ शारदी ।
सप्तपर्णांबुपिपल्योः सुनंदा रोचनांगना ॥३३२॥

---

माकंदः । यथा–माकन्दमंजरीपुंजपिंजरीकृतकाननः । माकन्द्या-मलकी फले । माकन्द्याः फलं माकन्दी । दोरथाणिन इति मयट् । फल इति तस्य लुप् । हरीतक्यादित्वात्स्त्रीत्वं गौरादित्वा-ड्ङीः ॥३२९॥ मुकुंदः पारदे रत्नविशेषे गरुडध्वजे । मुंचति मुकुंदः । मुचेर्ङुः । कुंदक कुंदाविति डुकन्दः । त्रिष्वपि यथा–मुकुंदो वंद्यते न कैः । निधिविशेषेऽपि यथा–मुकुंदकुंदनीलाश्च चर्चा स्वनिधयो न वा । मेनादः केकिनिच्छागे मार्जारे । मे इति नादोऽस्य मेनादः। त्रिष्वपि यथा–मेनादनादं स निशम्य बालः। वरदः पुनः । प्रसन्ने शान्तचित्ते च । वरं ददाति वरदः । वाच्यलिंगः ॥३३०॥ प्रसन्नः कृतानुगृहः । द्वयोर्यथा–वृणुते वरदः शंभूरस्मत्संक्रमितैः । वरदा तु कुमारिका । वराय दीयते वरदा । क्वचिदिति डः । विशदः पांडुरे व्यक्ते । विशीयते विशदः । पांडुरे गणे पुंसि । तद्वति व्यक्तौ च वाच्यलिंगः। पांडुरे यथा–कुंदेंदुविशदं यशः । व्यक्ते यथा – हिमव्यपायाद्वि-शदाधराणाम् । शारदो वत्सरे नवे । शरद्भवे पीतमुद्गर-शालिनेपि । शरदेव शारदः । प्रज्ञादित्वादण् । शरदि ऋतुविशेषे भव इति वा शारदः । भर्तुसंध्यादिरिणित्यण् । नवे शरद्भवे शालिने वाच्यलिंगः । वत्सरे यथा–निपतन्त्येव बालानामष्टमे शारदे रदाः । नवे यथा– शारदैर्मृगमदैः प्रमदाभिः ॥३३१॥



जननी बाहुबलिनोऽप्यगाधोऽस्ताघरंध्रयोः ।
अवधिः स्यादवधाने कालसीमबिलेष्वपि ॥३३३॥
आनद्धं बद्धमुरजाद्याविद्धः क्षिप्तवक्रयोः ।
आबंधो भूषणे प्रेम्णि बंधेऽथोत्सेध उच्छ्रये ॥३३४॥

---

शरद्भवे यथा–आतपत्रीभवत्येते क्षणं शारदवारिदाः। शालीनो-ऽधृष्टः । अथ शारदी सप्तपर्णांबुपिपल्योः । सप्तपर्णा वृक्षभेदः। अंबुपिप्पली जलपिप्पली । मंखस्तु त्रिष्वधृष्टनवे शुद्धौ शारदोऽपि शरद्भवे । अस्त्री संवत्सरे सप्तपूर्णीव शारदी पुनः । लांगली शारदादेवी । तत्र देव्यां यथा–शारदां शारदांभोदसितां हंसासनां नुमः । सुनंदा रोचनांगना । जननी बाहुबलिनोपि । सुष्ठु नंदति सुनन्दा । रोचना रागद्रव्यं । अंगना स्त्री ॥३३२॥ बाहुबलिन आदिनाथपुत्रस्य जनन्यां यथा–वनेचरान् गिरिवरान् दुर्मदान् स्वापदान्यपि । द्राक् खंजीभवतः पश्यत्सुनंदानंदनाज्ञया । अथ धान्ताः । अगाधोऽस्ताघरंध्रयोः । न गाधते अगाधः। अस्ताघे वाच्यलिंगः । अस्ताघेऽलब्धमध्ये यथा–कियद्गाधमगाधं वा गजं पृच्छसरः सखे । रंध्रे यथा–दुष्टांधतमसाक्रांतादगाधान्मां समुद्धर । अवधिः स्यादवधाने कालसीमविलेष्वपि । अवधीयतेऽसौ अवधानं वा अवधिः । उपसर्गाद्दः किरिति (५ । ३ । ८७) किः । पुंसि । चतुर्ष्वर्थेषु काले सीम्नि च यथा–शेषान्मासान्गम-नदिवसस्थापितस्यावधेर्वा विन्यस्यंती भुवि गणनया देहली-दत्तपुष्पैः ॥३३३॥ आनद्धं बद्धमुरजादि । आनह्यते स्म आनद्धं । बद्धे वाच्यलिंगः । तत्र यथा–भुजंगमानद्धजटाकलापम् । मुरजादौ यथा–ततं वीणादिकं वाद्यमानद्धमुरजादिकम् । आविद्धः क्षिप्तवक्रयोः ।. आविध्यते स्म आविद्धः । वाच्यलिंगः। क्षिप्ते

संहननेऽप्युपाधिस्तु धर्मध्याने विशेषणे ।
कुटुंबव्यापृते छद्मन्युपधिव्याजचक्रयोः ।।३३५।।
कबन्धं तुंडे रुंडेऽप्सु कबन्धो राहुरक्षसोः ।
दुर्विधो दुर्जने निःस्वे न्यग्रोधो वटपादपे ।।३३६।।

यथा–पयोधिमाविद्धचलज्जलाविलम् । विलंघ्य लंकां निकषा हनिष्यति । वक्रे यथा–आविद्धवलितजघनं । आबंधो भूषणे प्रेम्णि बंधे । आबध्यतेऽसौ अनेन वा आबंधनं इति वा आबंधः । भूषणे यथा–प्रभ्रष्टैः सरभसमंभसोऽवगाहक्रीडाभिर्विदलितयूथिकाविशांगैः । आबंधैः सरसिहिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि । प्रेम्णि यथा–पुत्रदारनिराबंधः। बंधे यथा– प्रेमाबंधविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि। अथोत्सेध उच्छ्रये । संहननेऽपि । उत्सेधनं उद्ध्वं सिध्यत्यनेन वा उत्सेधः। पुंक्लीबः। उच्छ्रये यथा–बबन्ध बालारुणबभ्रुवल्कलं पयोधरोत्सेधविसीर्णसंहति ।।३.४।। संहनने शरीरे यथा–स्थूलोत्सेधव्यवहितरथस्यात्मनः कुंभकर्णः । उपाधिस्तु धर्मध्याने विशेषणे। कुटुंबव्यापृतच्छद्मनि । उपाधीयते उपाधिः। चतुर्ष्वर्थेषु पुंसि । धर्मध्याने यथा–विनोपाधेः शास्त्रं तृणतुषबुसप्रख्यमधुना विशेषणे यथा–उपाधिरहितः सोऽपि स्फटिको न विराजते । कुटुंबव्यापृते यथा–उपाधिर्बाधंते विविधविधिभिर्बांधवजनाः । छद्मनि यथा–चिद्रूपानंदमयो निःशेषोपाधिवर्जितः शुद्धः। उपधिव्याजचक्रयोः । उपधीयते उपधिः । पुंसि। व्याजे यथा–अरिषु हि विजयार्थिनः क्षितीशा न विदधति सोपधिसंधिदूषणानि । चक्रं रथांगं ।।३३५।। कबंधं तुंडे रुण्डेऽप्सु । कवते कूयते वा कबंधं । कोरंध इति (उ० २५७) अंधः। कस्य शिरसो



शम्यां व्यामे न्यग्रोधी तु मोहनाख्योषधीभिदि ।
वृषपर्ण्यां निषधस्तु कठिने पर्वते स्वरे ।।३३७।।
देशतद्राजयोश्चापि निरोधो नाशरोधयोः ।
प्रसिद्धो भूषिते ख्याते प्रणिधिर्याचने चरे ।।३३८।।

बंधोऽत्रेति वा केन बंध्यं वा पृषोदरादित्वात् । रुन्डे पुंक्लीबः। शेषयोः क्लीबे । रुन्डं अपशीर्षं वपुः । तत्र तुंडे च यथा–त्वदर्थीयक्रव्यात्कपिकुलकबंधव्यतिकरैः । करालेयं भूमिर्भुवनमयमद्यापि तनुते । अप्सु यथा–कबंधसंबन्धविवृद्धपादपं । कबंधो राहुरक्षसोः । राहौ यथा–कबंधो बाधते विधुम् । रक्षसि यथा–बधनिर्धूतशापस्य कबन्धस्योपदेशतः । दुर्विधो दुर्जने निःस्वे । दुष्टा विधा क्रिया भोजनपिंडो वाऽस्य दुर्विधः । वाच्यलिंगः । दुर्जने यथा–दुर्विधेषु विनयो न शोभते । निःस्वे यथा–विविनक्ति न बुद्धिर्दुर्विधः स्वयमेव स्वहितं पृथग्जनः । न्यग्रोधो वटपादपे । शम्यां व्यामे । न्यक्रोहति न्यग्रोधः । लिहाद्यचि वीरुन्न्यग्रोधाविति (४।१।१२१) साधुः। न्यक्रुणद्धि वा । वटपादपे यथा–न्यग्रोधे फलशालिनि स्फुटरसं किंचित्फलं पच्यते ।।३३६।। शमी वृक्षभेदः । व्यामस्तिर्यक्प्रसारितबाह्वन्तरं । तत्र यथा–न्यग्रोधमेयचतुरस्रनितंबबिंबा। न्यग्रोधी तु मोहनाख्यौषधीभिदि । वृषपर्ण्यां । गौरादित्वाङ्ङीः । वृषपर्णी आखुपर्णी । निषधस्तु कठिने पर्वते स्वरे । देशतद्राजयोश्चापि । निष्यति निषधः । नेः स्यतेरधक् (उ० २५२) कठिने वाच्यलिंगः । तत्र यथा–निषिद्धं निषधं वचः । स्वरो निषधाख्यः । तत्र यथा–धैवतो निषधः। सप्ततंत्री कंठोद्भवाः स्वराः । पर्वते देशे तद्राजे च यथा–स नैषधस्यार्थपतेः सुतायामुत्पादयामास निषिद्धशत्रुः । अनूनसारं निषधान्नगेंद्रात्पुत्रं यमाहुर्निषधाख्यमेव ।।३३७।। निरोधो

परिधि यज्ञियतरोः शाखायामुपसूर्यके ।
मागधो मगधोद्भूते शुक्लजीरकबंदिनोः ॥३३९॥
वैश्यतः क्षत्रियापुत्रे मागधी तु स्यात्पिप्पली ।
यूथीभाषाविशेषश्च विबुधः पंडिते स्वरे ॥३४०॥

नाशरोधयोः । निरोधनं निरोधः । नाशे यथा— स्थितिसर्गनिरोधकारिणा भवता विश्वजनीनमीदृशं । रोधे यथा—अन्तश्चराणां मरुतां निरोधात् निवातनिष्कंपमिव प्रदीपम् । प्रसिद्धो भूषिते ख्याते । प्रसिध्यते प्रसिध्यति स्म वा प्रसिद्धः। वाच्यलिंगः। द्वयोर्यथा—यथा प्रसिद्धैर्मधुरं सरोरुहं जटाभिरप्येवमभूत्तदाननम् । प्रणिधिर्याचने चरे । प्रणिधानं प्रणिधीयते वा प्रणिधिः । पुंसि । याचने यथा—प्रणिधिवशादुपजातसत्प्रभावः। चरे यथा—श्रुतं मया मत्प्रणिधिः सवर्ग्यः। प्रणिधानेऽपि ॥३३८॥ परिधि यज्ञियतरोः शाखायामुपसूर्यके । परितोऽग्नेश्चतुर्दिक्कृत्वं धीयते दर्भास्तरणवत् परिधिः । परिधीयते सूर्यादिरनेन वा । पुंसि । यज्ञियो यज्ञार्हस्तरूस्तस्य शाखा । तत्र यदाह—बहुप्रमाणाः परिधेरच्छिन्नाग्रोऽतिपत्रलः । उपसूर्यके सूर्यपरिवेषे यथा—परिधिमुक्त इवाह्मिदीधितिः । चक्रप्रांतेऽपि । मागधो मगधोद्भूते शुक्लजीरकबंदिनोः । वैश्यतः क्षत्रियापुत्रे । मगधेषु भवो मागधः। मगध्यति मगधः । ततः स्वार्थेऽणि वा मागधः । मगधोद्भूते वाच्यलिंगः । तत्र यथा—न मे ह्रिया शंसति किंचिदीप्सितं । स्पृहावती वस्तुषु केषु मागधी । बंदिनि यथा—प्रणिजगदूरकाकिश्रावकस्निग्धकंठाः। परिणतिमिति रात्रेर्मागधा माधवाय ॥३३९॥ वैश्यतः क्षत्रियापुत्रे यथा—सूतमागधबंदिभिः । मागधी तु स्यात्पिप्पली । यूथी भाषाविशेषश्च । पिप्पली कणा । यूथी



विस्रब्धोऽनुद्धते शान्ते विश्वस्तात्यर्थयोरपि ।
विवधो वीवधो भारे पर्याहाराध्वनोरपि ॥३४१॥
संबाधः संकटे योनौ संरोधः क्षेपरोधयोः ।
संनद्धो वर्मिते व्यूढे समाधिः स्यात्समर्थने ॥३४२॥

पुष्पलता । भाषाविशेषे यथा— एकरूपा हि भगवतोऽर्धमागधीभाषा धारिदविमुक्तवारिवदाश्रयानुरूपतया परिणमति । विबुधः पंडिते सूरे । विबुध्यते विबुधः । पंडिते वाच्यलिंगः । द्वयोर्यथा—जयत्यन्य स कोप्यध्वा भारत्याः खमिवाखिलः। क्षण्णोऽपि विबुधैर्बाढं विभात्यक्षुण्ण एव यः ॥३४०॥ विस्रब्धोऽनुद्धते शान्ते विश्वस्तात्यर्थयोरपि । विस्रंभते स्म विस्रब्धः । वाच्यलिंगः। विश्वस्ते यथा— विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षितिः पल्वले । अत्यर्थे यथा—विस्रब्धं परिचुंब्य जातपुलकामालोक्य गंडस्थलीम् । विवधो वीवधो भारे पर्याहाराध्वनोरपि । विवध्यते विवधः । घञ्युपसर्गस्य बहुलमिति दीर्घत्वे वीवधः । विविधो वधोऽस्येति वा । पर्याहारतृणजलान्नादीनामन्यत आनयनं । भारे यथा—वहन्ति वीवधं मूर्ध्ना न शास्त्रं जिह्वया जडाः । पर्याहारे ध्वनि च यथा—निरुद्धवीवधासारप्रसारांगा इव व्रजम् । एवं विवाधोऽपि ॥३४१॥ संबाधः संकटे योनौ । संबाधते संबाधः । सम्यक् बाधोऽत्रेति वा । संकटे वाच्यलिंगः । द्वयोर्यथा—करिहस्तेन संबाधे प्रविश्यांतर्विलोडिते । उपसर्पन्ध्वजः पुंसः । साधनान्तर्विराजते । संरोधः क्षेपरोधयोः । संरोधनं संरोधः क्षेपे यथा—योधसंरोधदुर्धर्षः। रोधे यथा—अंभसामोघसंरोधः प्रतीपगमनादिव । संनद्धो वर्मिते व्यूढे । संनह्यति स्म संनद्धः । वाच्यलिंगः । वर्मिते यथा—संनद्ध इव केसरी । व्यूढं विपुलम् ।

चित्तैकाग्र्यनियमयोर्मौने संन्निधिरंतिके ।
प्रत्यक्षे चाथ संसिद्धिः सम्यक्सिद्धिस्वभावयोः ।।३४३।।
अयनं पथिगेहेऽर्कस्योदग्दक्षिणतो गतौ ।
अम्लानस्त्वमले किंटीभेदेऽर्जुनं तृणे सिते ।।३४४।।

समाधिः स्यात्समर्थने । चित्तैकाग्र्यनियमयोर्मौने । समाधानं समाधीयते मनोऽस्मिन्वा समाधिः । पुंसि । समर्थनं चोद्यपरिहार उत्तरमिति यावत् । यथा—अयं त्वदुक्ते तव पूर्वपक्षे समाधिराधीयत एष साधुः ।।३४२।। चित्तैकाग्र्ये यथा—सा भूधराणामधिपेन तस्यां समाधिमत्यां उदपादि भव्या । नियमे यथा—यदा फलं पूर्वतपः समाधिना न तावता लभ्यममंस्त मानिनी । मुनेर्भावः कर्म चा मौनं ध्यानवचनाभावादि । तत्र यथा—आत्मेश्वराणां न हि जातु विघ्नाः। समाधिभेदप्रभवा भवन्ति। संनिधिरंतिके प्रत्यक्षे च । संनिधीयते सन्निधिः। पुंसि । अंतिके यथा—वीतविघ्नमनघेन भाविता संनिधिस्तव मुखेन मेऽधुना । प्रत्यक्षे यथा—यातः सन्निधिमस्य तीव्रतपसा देवो भवानीपतिः। अथ संसिद्धिः सम्यक्सिद्धिस्वभावयोः। सम्यक् सेधनं संसिद्धिः। स्त्रियां क्तिः। सम्यक्सिद्धौ यथा—संसिद्धिसिद्धविभवाः मुनयः प्रयाताः। स्वभावे यथा—संसिद्धिरेषा सुजनस्य नित्यं परोपकारेषु हि यः प्रयत्नः। ।।३४३।। अथ नान्ताः अयनं पथिगेहेऽर्कस्योदग्दक्षिणतो गतौ। अयंतेऽस्मिन्निति अयनं। पथिगेहे यथा— किं वा मृगा मृगपतेरयनेष्वयंते। अर्कस्योदग्गतौ यथा—गंगायां च दिवा भूमावतीते चोत्तरायणे। दक्षिणगतौ यथा—अगस्तिचिह्नादयनात्समीपं। दिगुत्तरा भास्वति संनिवृत्ते। अम्लानस्त्वमले किंटीभेदे। न म्लायति स्म अम्लानः। क्तेव्यंजनान्तस्थेति नत्वं।



नेत्ररोगेऽर्जुनंपार्थे हैहये केकीनि द्रुमे ।
मातुरेकसुते चार्जुन्युषा गोः कुट्टनी सरित् ।।३४५।।
अंगनं प्रांगणे याने ष्यंगना तु नितंबिनी ।
स्यादपानं गुदेऽपानस्तद्वायावंजनं मसौ ।।३४६।।

अम्ले वाच्यलिंगः। तत्र यथा—अम्लानमुखपंकजाः। किंटीभेदो वर्णतरूस्तत्र यथा—ये चत्वारो दिनकरकुलक्षत्रसंतानमल्लीमालाम्लानस्तवकरुचिरा जज्ञिरे राजपुत्राः। अर्जुनं तृणे सिते। नेत्ररोगे। अर्ज्यतेऽर्जुनः। यम्यजीत्युनः। (उ० २८८) सिते गुणे पुंसि। तद्वति वाच्यलिंगः। तृणे यथा—सोमं यदि न वंदेयुः पूतीकानभिषुणुयुः। यदि पूतीकान्न लभेयुरर्जुनो न्यभिषुणुयुः। सिते शुभ्रे यथा—पिशंगमौंजीयुजमर्जुनच्छविम् ।।३४४।। अर्जुनं पार्थे हैहये केकीनि द्रुमे। मातुरेकसुते च। पार्थे यथा—कोदंडं यस्य गांडीवं स्पर्धते कस्तमर्जुनम्। हैहये यथा—स्मरसि यदर्जुनः कार्त्तवीर्यः। केकी मयूरः। द्रुमः ककुभाख्यः। तत्र यथा—उत्फलार्जुन सर्व वासितमरुत्। मातुर्जनन्या एक एव सुतः सोऽर्जुन इत्यभिधीयते। अर्जुन्युषा गौः कुट्टनी सरित्। उषा रात्रिः। गवि यथा— आस्ते पुजितमर्जुनीकुलमपस्तं वेपला शोषरे। कुट्टनी शभली। सरित् करतोयाख्या नदी ।।३४५।। अगनं प्रांगणे यानेऽपि। अगति अस्मिन् अंग्यते वा अंगनं। अनट्। प्रांगणे यथा—अनंगांगनमंगनाः। यानं गमनं। अंगना तु नितम्बिनी। प्रशस्तमंगमस्त्यस्याः अंगना। नांगादेरिति नः। यथा—प्रायेणैते रमणविरहेष्वंगनानां विनोदाः। स्यादपानं गुदे। अपातीत्यनेन अपानं। व्यंजनाद्घञ्। अपावृत्यनीयते

 वा क्वचिदिति डः। यथा—संकोच्यापानरंध्रं हुतवहसदृशं तंतु-

**रसांजनेऽक्तौ सौवीरेथांजनो दिग्मतंगजे ।**
**अंजना तु हनुमन्मातर्यंजनी लेप्ययोषिति ।।३४७।।**
**अवनं रक्षणप्रीत्योरर्यमा पितृदैवते ।**
**तरणौ सूर्यभक्तायांमशनिर्वज्रविद्युतोः ।।३४८।।**
**अरत्निः कुर्प्परे पाणौ सप्तकोष्टततांगुलौ ।**
**आसनं विष्टरे हस्तिस्कन्धे यात्रानिवर्तने ।।३४९।।**

वृत्सूक्ष्मरूपम् । अपानस्तु तद्वायौ । यथा–अपानपवनोमन्या पृष्टपृष्टांतपार्ष्णिगः । अंजनं मसौ । रसांजनेक्तौ सौवीरे । अज्यतेऽनेनाक्षिअनक्ति वा अंजनं । मसौ कज्जले यथा–वसानमेणाजिनमंजनद्युति ।।३४६।। रसांजनमंजनविशेषः । अक्तिर्धात्वर्थमात्रं । तत्र यथा-मान्यः सैष मुनिः निरंजनमनाः । सौवीरं धातुविशेषः । अंजनो दिग्मतंगजे दिग्मतंगजे पश्चिमाशागजे । यथा–अंजनजनितविकाराधरेव दृष्टिर्न ते रम्या । अंजना तु हनुमन्मातरि । अनक्ति अंजना । नंद्यादि अने आप् । यथा–अंजनामगमद्वायुः । अंजनो लेप्ययोषिति । कर्तर्यंनटि डीः । रंजितः पुंजितः श्रीभिरंजनीभिर्जनीजनः ।।३४८।। अवनं रक्षणप्रीत्योः । अव्यते अवनं । द्वयोर्यथा – समुद्रकावेरवनेः कृतावनः । अर्यमा पितृदैवते । तरणौ सूर्यभक्तायां । अरीनामयति अर्यमा । श्वन्मातरिश्वन्निति (उ० ९०२) इति साधुः । पितर एव दैवते पितृदैवतं । तरणौ यथा–प्रोषितार्यमणं मेरोरंधकारस्तटीमिव । सूर्यभक्ता ओषधिः। अशनिर्वज्रविद्युतोः । अश्नुतेऽशनिः । शदिवृत्यमीत्यनिः। स्त्रीपुंसः। वज्रे यथा– जहार चान्येन मयूरपक्षिणा शरेण शक्रस्य महाशनिध्वजम् । विद्युति यथा–अशनेरमृतस्य चोभयोर्वशिनश्चांबुधराश्च योनयः । करकेऽपि ।।३४८।। अरत्निः कुर्प्परे पाणौ



**आसनो जोवकतरावासनी पण्यवीथिका ।**
**आपन्नः सापदि प्राप्तेऽप्यादानं वाजिभूषणे ।।३५०।।**
**ग्रहणेऽथोत्थानं सैन्ये पौरुषे युधि पुस्तके ।**
**उद्यमोद्गमहर्षेषु वास्त्वंतेङ्गनचैत्ययोः ।।३५१।।**

सप्रकोष्टततांगुलौ । इयर्ति अरत्निः । स्त्रीपुंसः। कुर्परे बाहुमध्यसंधौ यथा– छिन्नास्त्रा. प्रहरंत्यरत्निभिरपि क्रुद्धा हि योधा युधि । सप्रकोष्ठततांगुलौ पाणौ यथा–अरत्निमात्रीमपि नो भुवं ददौ । आसनं विष्टरे हस्तिस्कन्धे यात्रानिवर्त्तने । आस्यतेऽस्मिन् आसना वा आसनं । विष्टरे पुंक्लीबः । तत्र यथा–स्वहस्तदत्ते मुनिमासने मुनिश्चिरंतनस्तावदभित्यवीविशत् । हस्तिस्कंधे यथा–आसनास्फालनव्यग्रकरः संग्रामभूमिषु । यात्रा विजिगीषोः शत्रुं प्रति यानं । तस्या निवर्त्तने यथा – क्षीणस्यैव क्रमशो दैवात् पूर्वंकृतेन वा मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ।।३४९।। आसनो जोवकतरो । जोवकतरुर्वृक्षविशेषः । आसनो पण्यवीथिका । पण्यवीथिका पणिः । आपन्नः सापदि प्राप्तेऽपि । आपद्यते स्म आपन्नः । वाच्यलिंगः । सापदि यथा–आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् । प्राप्ते यथा–आपन्नपन्नगविषोपशमः कुमारः । आदानं वाजिभूषणे । ग्रहणे । आदीयते आदानं । वाजिभूषणे यथा–आदानसंदानितकंधराग्रः। ग्रहणे यथा–आदानं हि विसर्गाय पुंसां वारिमुचामिव ।।३५०।। उत्थानं सैन्ये पौरुषे युधि पुस्तके । उद्यमोद्गमहर्षेषु वास्त्वंतेऽगनचैत्ययोः । मलोत्सर्गेऽपि । उत्थीयतेऽनेन अस्मिन्वा उत्थानं । एकादशस्वर्थेषु । सैन्ये पौरुषे युधि हर्षे च यथा–उत्थाना तु गतो जिगाय दिवसैः कैश्चित्स सर्वादिशः । पुस्तकं लिखित-

मलोत्सर्गेप्यथोत्तानः सुप्तोन्मुखगभीरयोः ।
उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने ।।३५२।।
उद्धानमुद्गमे चुल्ल्यामुदानः पवनांतरे ।
सर्पभिद्युदरावर्त्ते कमनोशोकपादपे ।।३५३।।

---

पत्रसंचयः। उद्गमः ऊद्द्रोभवनं तत्र यथा–उत्थानोपनिवेशनानि कुरुते तल्पे मुहुः पांसुला। वास्तु गेहं तस्यांतस्तत्र उद्यमें अंगने च यथा–सूत्थाने सुजने जनस्य रमते चेतो यथा सद्मनि। चैत्यं विहारः ।।३५?।। मलोत्सर्गः पुरीषोत्सर्गः। अथोत्तानः सुप्तोन्मुख-गभीरयोः। उत्तन्यते उत्तानः। वाच्यलिंगः। सुप्तश्चासावुन्मुख-श्च सुप्तोन्मुखस्तत्र यथा–डिम्भैरुत्तानशायिभिः। अगभीरमुन्नत-मध्यं तत्र यथा – उत्तानपाणिद्वयसन्निवेशात्प्रफुल्लराजीवमिवांक-मध्ये। उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने। उद्यायते उद्या-त्यनेन अस्मिन्वा उद्यानं। निःसरणं निर्गमनं। वनभेदो राजा-दिक्रीडास्थानं पुष्पवाटी वा। तत्र पुंक्लीबः। यथा–विश्रांतः सन् व्रज नवनदीतीरजातानि सिंचन्नुद्यानानां नवजलकणै-र्यूथिकाजालकानि। प्रयोजनं प्रवृत्तिसाध्यं फलं ।।३५२।। उद्धानमुद्गमे चुल्ल्यां। ओहांक् गतौ। डुधांग्क् धारणे च वा। उद्धायते उद्धत्यत्र वा उद्धानं। उद्गमे यथा-उद्धानं धान्यसंततेः। चुल्ल्यां यथा–उद्धानाद्भांडमुत्क्षिप्य। उदानः पवनान्तरे। सर्प-भिद्युदरावर्त्ते। ऊर्ध्वमानयति रसादीन् उदानः। क्वचिदिति डः। उदानिति वा पवनांतरे यथा–उदानो हृच्छिरांतरे। सर्पभित् सर्पभेदः। उदरावर्त्त उदररोगविशेषः। कमनोशोकपादपे। कामिकामाभिरूपेषु। कामयते कमनः। रम्यादिभ्यः कर्तरि (५।३।१२६) इत्यनट्। काम्यभिरूपयोर्वाच्यलिंगः। चतुर्ष्वपि



कामिकामाभिरूपेषु कठिनं निष्ठुरोखयोः ।
कठिनी तु खटिका स्यात्कठिना गुडशर्करा ।।३५४।।
कर्त्तनं योषितां तूलसेवने च्छेदनेऽपि च ।
क्रंदनं रोदने ह्वाने कल्पनं कॢप्तिकर्त्तने ।।३५५।।
कल्पनेभसज्जायां कलापी प्लक्षकेकिनोः ।
कंचुकी जोंगकतरौ महल्ले पन्नगे विटे ।।३५६।।

---

यथा–निकामं कामिनीनां हि प्रयाति कमने मनः ।।३५३।। कठिनं निष्ठुरोखयोः। कठति कठिनं। श्याकठीतीनः (उ० २८२)। निष्ठुरे वाच्यलिंगः। तत्र यथा–न गूढान्तःकोपाकठिनहृदये संवृतिरियं। उखा भाजनविशेषः। तत्र यथा–मठे कठिनसंकटे प्रविलुठंति कष्टं शठाः। कठिनी तु खटिका स्यात्। यथा–कठिन्या मारयन्त्येते गणयन्तो वणिक्शठाः। कठिना गुडशर्करा। गुडशर्करा शर्कराभेदः ।।३५४।। कर्त्तनं योषितां तूलसेवने-च्छेदनेऽपि च। कृत्यते कर्त्तनं। तूलं निरस्थिकर्पासः तस्य सेवनं तत्र यथा–रंडाः कर्त्तनगोष्ठीषु न तिष्ठंति कथां विना। छेदने यथा–प्रथयतितरां स्वैराचारप्रवर्तनकर्त्तनम्। क्रंदनं रोदने ह्वाने। क्रदु रोदनाह्वानयोः। क्रंद्यते क्रंदनं। द्वयोर्यथा–किं क्रंदनेन न हि कोपि श्रृणोति शून्ये। कल्पनं कॢप्तिकर्त्तने। कॢप्यते कल्पनं। कॢप्तौ यथा-तल्पकल्पनविधेरनंतरम्। कर्त्तने यथा–श्मश्रुकेशनख-दैर्घ्यकल्पनम् ।।३५५।। कल्पनेभसज्जायां। कल्पनं कल्पना। णिवेत्यासेत्यनः (५।३।१११)। यथा–कल्पनासज्जसेनानी-नीतबंधुरसिंधुरः। कलापी प्लक्षकेकिनोः। कलापोऽस्त्यस्य कलापी। प्लक्षो वृक्षः। केकिनि यथा–कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु। कंचुकी जोंगकतरौ महल्ले

कांचनं हेम्नि किंजल्के कांचनो नागकेसरे ।
उदुंबरे कांचनारे पुन्नागे चंपकेऽपि च ।।३५७।।
कांचनी तु हरिद्रायां कानीनः कन्यकासुते ।
कर्णे व्यासे काननं तु ब्रह्मास्ये विपिने गृहे ।।३५८।।
कुहनो मूषिके सेर्ष्ये कुहना दंभकर्मणि ।
कुंडली वरुणे सर्पे मयूरे कुंडलान्विते ।।३५९।।

---

पन्नगो विटे । कंचुकमस्त्यस्य कंचुकी । जोंगकतरुरगरुवृक्षः। शेषेषु यथा–द्वारं रवड्गिरावृतं बहिरपि प्रक्लिन्नगंडैर्गजैरन्तः कंचुकिभिः स्फुरन्मणिशिखैरध्यासिता भूमयः ।।३५६।। कांचनं हेम्नि किंजल्के । काम्यते कांचनं । विदनगगनेति (उ० २७५) साधुः । हेम्नि यथा–क्षणं वपुरपावृणु स्पृशतु कांचनं कलिकाम् । किंजल्के यथा–स्वर्णांबुजैः कांचनरेणुगर्भैः । कांचनो नागकेसरे । उदुंबरे कांचनारे पुंनागे चंपकेऽपि च । पंचापि वृक्षभेदाः । धत्तूरेऽपि ।।३५७।। कांचनी तु हरिद्रायां । गौरादित्वाङ्गीः । हरिद्रा रजनी । कानीनः कन्यकासुते । कर्णे व्यासे । कन्यायाः अपत्यं कनीनः। कन्यायाः त्रिवेण्याः । कनीनत्रिवणं चेति साधुः । व्यासे यथा–वंदे वाल्मीककानीनौ । काननं तु ब्रह्मास्ये विपिने गृहे । कस्य ब्रह्मणः आननं काननं । कनति वा । वदनेति (उ० २७५) इति साधुः । विपिने यथा–शीतो वायुः परिणमयिता काननोदुंबराणाम् ।।३५८।। कुहनो मूषिके सेर्ष्ये । कुहणि विस्मापने । कुहयते कुहनः । सह ईर्ष्यया वर्त्तते सेर्ष्यः । तत्र वाच्यलिंगः । तत्र यथा–प्रियजानिरकुहनः । कुहना दंभकर्मणि । कुहनं कुहना । णिवेत्यासेत्यनः (५।३।१११) । यथा–नो विघ्नः कुहनाविटेन बटुना किं तेन कारिष्यते । कुंडली



केतनं सदने चिह्ने कृत्ये चोपनिमन्त्रणे ।
केसर्यर्वणि पुन्नागे नागकेसरसिंहयोः ।।३६०।।
कौपीनं गुह्यदेशे स्यादकार्ये चीवरान्तरे ।
कौलीनं जनवादेऽहिपशुपक्षिशुनां युधि ।।३६१।।

---

वरुणे सर्पे मयूरे कुंडलान्विते–कुंडलमस्त्यस्य कुंडली शिखादित्वादिन् । कुंडलान्विते वाच्यलिंगः । तत्र सर्पे च यथा–जात्यैव ये वायुभुजो विकर्णास्तान् भोगिनः कुंडलिनो वदंति ।।३५९।। केतनं सदने चिह्ने कृत्ये चोपनिमन्त्रणे । केत्यते ज्ञायतेऽनेन केतनं । सदने यथा–अकृतसत्कृतकृत्यः केतनं भूतभर्त्तुः । चिह्ने पुंक्लीबः । तत्र यथा–समाललंबे वृषराजकेतनः । कृत्यमवश्यकार्यम् । तत्र उपनिमंत्रणे च यथा–पूर्वेद्युः केतनं कार्यं वृद्धानां गृहमेधिनाम् । केसर्यर्वणि पुंनागे नागकेसरसिंहयोः । केसराः सन्त्यस्य केसरी । अर्वणि अश्वे यथा–सह्यः केन स केसरी । पुन्नागनागकेसरौ वृक्षौ । सिंहे यथा–केसरी निष्ठुरक्षिप्तमृगपूगो मृगाधिपः ।।३६०।। कौपीनं गुह्यदेशे स्यादकार्ये चीवरान्तरे । कूपप्रवेशनमर्हति कौपीनं । शालीनकौपीनार्त्विजीनमिति (६।४।१८५) । इति साधुः । गुह्यं पायोपस्थं तच्च तद्देशश्च । तत्र यथा–कौपीनाच्छादनं वल्कमक्षसूत्रं जटाजिनम् । अकार्यं पापकर्म तत्र यथा–उत्सर्पत्पीनकौपीननाशिताशेषविग्रहः । चीवरान्तरे गुह्याच्छादनवाससि यथा–कौपीनं वसनं कदन्नमशनं शय्या धरा पांसुरा । कौलीनं जनवादेऽहिपशुपक्षिशुनां युधि । अकार्ये गुह्यकौलीन्ये । कुलस्य जल्पः कौलीनं । कुलाजल्पे (७।१।८६) इति ईनञ् । कुलीने भवं कुलीनस्य भावः कर्म युवादेरण् । जनवादो लोकापवादः । तत्र यथा–मा कौलीना-

अकार्ये गुह्यकौलीन्ये गहनं वनदुःखयोः ।
गह्वरे कलिले चापि गंधनं तु प्रकाशने ।।३६२।।

सूचनोत्साहहिंसासु गर्जनं स्तनिते क्रुधे ।
गृंजनं विषदिग्धस्य पशोर्मांसे रसोनके ।।३६३।।

गोस्तनो हारभेदे स्याद्गोस्तनी हारहूरिका ।
घट्टना चलनावृत्योश्चलनः पादकंप्रयोः ।।३६४।।

दसितनयने मय्यविश्वासिनी भूः । अहिपशुपक्षिशुनां युधि युद्धे यथा—कौलीनकेलिसमये समये क्षितोऽभूत् ।।३६१।। अकार्यं कुत्सितं कर्म । गुह्यं गोप्यं । कौलीन्यं कुलीनत्वं । गहनं वन-दुःखयोः । गह्वरे कलिले चापि । गाह्यते गहनं । विदनेति (उ० २७५) साधुः । दुःखकलिलयोर्वाच्यलिंगः । वने यथा—अवि-शदशनैर्विध्यगहनं । दुःखं दुरवगाहं । तत्र यथा—किं गहनं स्त्री-चरितम् । गह्वरे । यथा-गिरिगहनानि विगाहयंति मोहात् । कलिल-माकीर्णं तत्र यथा—शार्दूलगहनं वनम् । गंधनं तु प्रकाशने । सूचनोत्साहहिंसासु । गंधिण् अर्दने । गंध्यते गंधनं । प्रकाशनं प्रकटनं ।।३६२।। सूचनं द्रोहाभिप्रायेण परदोषोद्घट्टनं । उत्साह उद्यमः । हिंसा प्राणिवधः । सर्वेषु यथा—तद्गंधनं प्रोद्धुर-कंधराणां नैवाद्रियन्ते सुजनाः खलानां । गर्जनं स्तनिते क्रुधे । गर्ज्यते गर्जनं । द्वयोर्यथा—न बिभ्यति भटा यस्माद्द्विषां गर्जनतर्जनैः । गृंजनं विषदिग्धस्य पशोर्मांसे रसोनके । गृजु शब्दे । गृंजति गृंजनं । धसिरसीत्यनः । रसोनकः कंकभेदः । तत्र पुंक्लीबः । तत्र यथा—रसोनो लशुनो रिष्टो गृंजनो दीर्घपत्रकः ।।३६३।। गोस्तनो हारभेदे स्यात् । गोस्तनाकृतित्वात् गोस्तनः । यथा—तस्याः



चलनं कंपे चलनी चारीभिद्वस्त्रघर्घरी ।
चंदनो वानरभिदि श्रीखंडे चंदनी नदी ।।३६५।।

चेतनः स्यात्सहृदयप्राणिनोश्चेतना तु धीः ।
चोलकी तु नागरंगे किष्कुपर्वकरीरयोः ।।३६६।।

कंपितगोस्तना स्तनतटी । गोस्तनी हारहूरिका । हारहूरिका द्राक्षा । तत्र यथा—संजातो बत गोस्तनोफलरसस्तत्त्वेऽपि वस्त्वंतरम् । घट्टना चलनावृत्योः । घट्टनं घट्टना । चलनं कंपनं । आवृत्तिरावर्त्तनं । द्वयोर्यथा—रणद्भिराघट्टनया नभस्वतः । चलनः पादकंप्रयोः । चलतीत्येवं शीलः चलनः । चाल्यशब्दार्था-दकर्मकाद् (५।२।४३) । इत्यनः । पादे यथा—चपलचलनकाक-प्रेरणोतुंगिताग्रं । कंप्रे वाच्यलिंगः ।।३६४।। चलनं कंपे । चल्यते चलनं । यथा—दिग्दंतिरोमचलनं धरणीं धुनोति । चलनी चारीभिद्वस्त्रघर्घरी । चलत्यनया चलनी । चारीभेदो भरत-शास्त्रप्रसिद्धः । वस्त्रघर्घरी बालिकापरिधानविशेषः । चंदनो वानरभिदि । श्रीखंडे । चंदति चंदनः । धसिरसीत्यनः । श्रीखंडे पुंक्लीबः । तत्र यथा—यद्यपि चंदनविटपी विधिना फलपुष्प-वर्जितो विहितः । चंदनी नदी । गौरादित्वाङ्ङीः ।।३६५।। चेतनः स्यात्सहृदयप्राणिनोः । चेतयते चेतनः । सहृदये यथा-चेतन-स्य न मतिर्विरुध्यते । प्राणिनि यथा—कामार्त्ता हि प्रकृतिकृपणा-श्चेतनाचेतनेषु । चेतना तु धीः । चेतनं चेतना । णिवेत्यासे-त्यनः । (५।३।१११) । यथा—अवगच्छति मूढचेतनः प्रिय-नाशं हृदि शल्यमर्पितम् । चोलकी तु नागरंगे किष्कुपर्वकरीरयोः । चोलकोऽस्त्यस्य चोलकी । नागरंगकरीरौ वृक्षौ । किष्कुपर्वाऽथ-

**छर्दनोऽलंबुषे निंबे छर्दनं वमनेऽपि च ।**
**छदनं पर्णगरुतोश्छेदनं कर्त्तने भिदि ॥३६७॥**
**जयनं विजयेऽश्वादिसंनाहे जघनं कटौ ।**
**स्त्रियः श्रोणिपुरोभागे जवनो वेगिवेगयोः ॥३६८॥**
**वेग्यश्वे नीवृति जवन्यपट्यांमोषधीभिदि ।**
**जीवनस्तु पुत्रंजीवे जीवनं वृत्तिवारिणोः ॥३६९॥**

वंशो वा ॥३६६॥ छर्दनोऽलंबुषे निंबे । छर्द्यतेऽनेन छर्दते वा छर्दनः । अलंबुषो राक्षसविशेषः । निंबो वृक्षः । छर्दनं वमनेऽपि च । छर्द्यते छर्दनं । यथा—दातव्यं छर्दनौषधं । छदनं पर्णगरुतोः । छादयति छदनं । विदन (उ० २७५) इति साधुः । पर्णे यथा—छदनांतरितातपा द्रुमाली । गरुति पक्षे यथा—चरन्ति चित्रच्छदनाः शिखण्डिनः । छेदनं कर्त्तने भिदि । छिद्यते छेदनं । कर्त्तने द्वैधीकरणे यथा—शरैः शरच्छेदनमाचरंति । भिदि विदारणे यथा—तुंदच्छेदननिर्यदंत्रविसरा वीराः क्रमन्ते पुरः ॥३६७॥ जयनं विजयेऽश्वादिसंनाहे । जयो जीयतेऽनेन वा जयनं । घसिरसीत्यनः । अश्वादिसंनाहे यथा—जयति जयनशाला वाजिनां राजकीया । जघनं कटौ । स्त्रियाः श्रोणिपुरोभागे । हन्यतेऽस्मिन् जघनं । हनेर्घतजघौ चेत्यनः । (उ० २७२) । कटौ यथा—पृथुलपृथुलास्थूलस्थूलाकृता जघनस्थली स्त्रियाः । श्रोणिपुरोभागे यथा—ज्ञातास्वादः पुलिनजघनां को विहातुं समर्थः । पश्चादर्थेऽपि मंखः । यथा—पश्यंति यन्न रिपवो जघनं हयानां । जवनो वेगिवेगयोः । वेग्यश्वे नीवृति । जवति जवनः । भूषाक्रोधेत्यनः । (५।२।४२) । जवतेऽनेन वा । वेगिनि वाच्यलिंगः । तत्र यथा—तत्प्रार्थितं जवनवाजिगतेन राज्ञा ॥३६८॥ नीवृत् देशः ।



**स्याज्जीवना तु मेदायां जीवनी तु मधुस्रवा ।**
**तलिनं विरले स्वच्छे स्तोकेऽथ तपनो रवौ ॥३७०॥**
**भल्लाते नरके ग्रीष्मे तलुनो यूनि मारुते ।**
**तमोघ्नो वह्निसूर्येन्दुबुद्धकेशवशंभुषु ॥३७१॥**
**तपस्वी तापसे दीने तरस्वी वेगिशूरयोः ।**
**तेमनं व्यंजने क्लेदे तेमनी चुल्लिभिद्यपि ॥३७२॥**

जवन्यपट्यांमोषधीभिदि । अपटी प्रतिसीरा । तत्र यथा—समीरशिशिरः शिरस्सु वसतां सताम् । जवनिका निकामसुखिनाम् । जीवनस्तु पुत्रंजीवे । जीवयति जीवनः । नंद्यादित्वादनः । पुत्रंजीवो वृक्षविशेषः । जीवनं वृत्तिवारिणोः । जीव्यतेऽनेन जीवनं । वृत्तौ यथा—क्व यामः किं कुर्मो गृहिणि गहनो जीवनविधिः । वारिणि यथा—जगज्जीवति जीवनैः ॥३६९॥ स्याज्जीवना तु मेदायां । मेदा ओषधिः । जीवनी तु मधुस्रवा । जीव्यतेऽनया जीवनो । अनट् । मधुस्रवा जीवन्ती । तलिनं विरले स्वच्छे । स्तोके । तलति तलिनं । विपिनेति (उ० २८४) । साधुः । वाच्यलिंगः । विरले यथा—तलिनमलिनदंतः सोऽयमग्रे पिशाचः। स्वच्छे निर्मले यथा—सौधानां तलिनोदरेषु पतितम् । स्तोकेऽल्पे यथा—मृगेक्षणानां तलिनोदरीणां । निरंतरं विग्रहकर्शितानाम् । अथ तपनो रवौ । भल्लाते नरके ग्रीष्मे । तपति तपनः । नंद्यादित्वादनः । रवौ यथा—पंचमः पंचतपसस्तपनो जातवेदसां ॥३७०॥ नरके यथा—अवीचौ तपने कल्पं वसेयुर्ब्रह्मघातकाः । तलुनो यूनि मारुते । तरति तरुणः । यम्यजिशक्य (उ० २८८) इत्युनः । रुफिडादित्वाल्लत्वे तलुनः । यूनि वाच्यलिंगः । तत्र यथा—नखैस्तलिनमौलिभिस्तलूनलून पीनस्तना । तमोघ्नो वह्निसूर्ये दुबुद्धकेशवशंभुषु । तमोऽधकारं पापं वा हन्ति तमोघ्नः । ब्रह्मादित्वादृक् । सर्वेषु यथा—निहन्तु विघ्नं जगतस्तमोघ्नः ॥३७१॥

**तोदनं व्यथने तोत्रे दहनो दुष्टचेष्टिते ।**
**भल्लाते चित्रकेऽग्नौ च दमनो वीरपुष्पयोः ॥३७३॥**
**दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः ।**
**स्वप्नलोचनयोश्चापि दंशनं वर्मदंशयोः ॥३७४॥**

तपस्वी तापसे दीने । तपोऽस्त्यस्य तपस्वी । अस्तपोमायेति (७।२।४७) विन् । वाच्यलिंगः । तापसे यथा—तपस्विभिर्या सुचिरेण लभ्यते । दीने यथा—किमनेन तपस्विना । तरस्वी वेगिशूरयोः । तरो वेगो बलं वाऽस्त्यस्य तरस्वी । वाच्यलिंगः । वेगिनि यथा—असकृदेव हितेन तरस्विना हरिहयाग्रशरेण धनुर्भृता । शूरे यथा—समरमूर्धनि तेन तरस्विना । तेमनं व्यंजने क्लेदे । तिम्यते तेमनं । व्यंजने यथा—संभारस्पृहणीयतेमनरसानास्वाद्य किंचित्ततः । क्लेदे यथा—स्वेदतेमनविलिग्नकंचुकाः । तेमनी चुल्लिभिद्यपि । यथा—खातास्तेमनिकाश्चमूचरनरैरस्तोकपाकोत्सुकैः ॥३७२॥ तोदनं व्यथने तोत्रे । तुद्यते तुदंत्यनेन वा तोदनं । व्यथने यथा—विधातव्यं न वाचापि बुधैः सज्जनतोदनम् । तोत्रे यथा—नालस्यतश्चलति तोदनताडितोऽपि । दहनो दुष्टचेष्टिते । भल्लाते चित्रकेऽग्नौ च । दहति दहनः । दुष्टचेष्टिते वाच्यलिंगः । तत्र भल्लाते चित्रके च यथा—दहनो दाहकः खलु । अग्नौ यथा—धूमांधितेन दहनेन न वीक्षितासि । दमनो-वीरपुष्पयोः । दाम्यति दमयति वा दमनः । पुष्पे यथा—पूजाविधिर्दमनकेन चयः स्मरस्य तस्मिन्मधुः स भगवान् गुरुरंगनानां ॥३७३॥ दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः । स्वप्नलोचनयोश्चापि । दृष्टिर्दृश्यतेऽनेन अस्मिन्वा दर्शनं । सप्तस्वर्थेषु दर्पणे यथा—अंधस्य किं दर्शनदर्शनेन । धर्मे यथा—



**द्विजन्मा वौ रदे विप्रे दुर्नाम पुनरर्शसि ।**
**दुर्नामा दीर्घकोश्यां स्याद्देवनोऽक्षेऽथ देवनं ॥३७५॥**
**व्यवहारे जिगीषायां क्रीडायां धमनो नले ।**
**क्रूरे भस्त्राध्मायके च धमनी कंधरा सिरा ॥३७६॥**

अहिंसा जिनदर्शने । उपलब्धिर्ज्ञानं । तत्र यथा—सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते । बुद्धिर्मतं तत्र यथा—इत्येकेषां हि दर्शनम् । शास्त्रे यथा—ज्ञाता षण्णां दर्शनानां अस्मिन् वाङ्मयसद्मनि । स्वप्ने यथा—दर्शनेऽद्य मया दृष्टः सुप्तया निशि वल्लभः। लोचनं दृष्टिस्तत्र यथा—पाणिना कुरुते बाला दर्शनस्पर्शनं मुहुः । विलोकनेपि । यथा—तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः। दंशनं वर्मदंशयोः । दंशयति दश्यते वा दंशनं । वर्मणि यथा—अंसैर्दंशनबंधुरैः । दंशे यथा—दंशदंशनभयेन धेनवः ॥३७४॥ द्विजन्मा वौ रदे विप्रे । द्वे जन्मनी यस्य द्विजन्मा । तारकास्वपि मंखः । विः पक्षी । विप्रेत्युपलक्षणम् । तेन क्षत्रियवैश्ययोरपि । वौ विप्रे तारकासु च यथा—हिरण्यगर्भो भुवनांडकादिव क्षपाकरः क्षीरमहार्णवादिव । अभूत्सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः । रदे यथा—सद्य एव तु शुद्धिः स्यादजातेषु द्विजन्मसु । दुर्नाम पुनरर्शसि । दुष्टं नामास्य पापरोगत्वात् दुर्नाम । क्लीबे । यथा—दुर्नामभिर्वामिन एष जातः दुर्नामा दीर्घकोश्यां स्यात् । दुष्टं नमति दुर्नामा । सात्मन्नात्मन्निति (उ० ९१६) साधुः । स्त्रियां । दीर्घकोशी जलजंतुविशेषः । देवनोऽक्षे । दीव्यंत्यनेन देवनः । अक्षः पाशकः । यथा—देवनाच्छलकृतो हि किमत्र । अथ देवनं । व्यवहारे जिगीषायां क्रीडायां । दीव्यते देवनं ॥३७५॥ त्रिष्वपि यथा—प्रकटीकृत-

हरिद्रा च धावनं तु गतौ शौचेऽथ नंदनम् ।
इन्द्रोद्याने नंदनस्तु तनये हर्षकारिणि ।।३७७।।
नलिनं नलिकातोयेऽम्बुजेषु नलिनी पुनः ।
पद्माकरे गंगाब्जिन्योर्निधनं कुलनाशयोः ।।३७८।।

देवनान्कुरून् । धमनो नले । क्रूरे भस्त्राध्मायके च । धमिः सौत्रः । धमति धम्यते वा धमनः । यूसिरसीत्यनः । नलस्तृणविशेषः । अनल इत्यन्यः । यदाह—धमनोऽप्यनले भस्त्राध्मायकक्रूरयोः स्मृतः । क्रूरभस्त्राध्मायकयोर्वाच्यलिंगः । तयोर्यथा—धमनानां मनः-शुद्धिर्वर्त्तते न मनागपि । धमनी कंधरा सिरा । हरिद्रा च । धमति धमनिः । शदिवृत्यमीति अनिः । ङ्यां धमनी । कंधरायां यथा—चंच्वाक्षेपप्रहारैस्तुटितधमनिभिर्दिक्षु विक्षिप्यमाणै-राशापालोपहारं दशभिरपि भृशं त्वच्छिरोभिः करोमि । सिरायां यथा—धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तरा ।।३७५।। हरिद्रा रजनी अग्न्युद्दीपनभांडेऽपि **मंखः** । यथा—मुखेनोपधमेदग्निं धमन्यं-तरितेन तु । धावनं तु गतौ शौचे । धाव्यते धावनं । गतौ वेगवति यथा—धने पुण्यैकसंसाध्ये मुधा धावनमर्थिनां । शौचे यथा—साधुभिः प्रातरुत्थाय विधेयं दन्तधावनम् । अथ नंदनं । इन्द्रोद्याने । नंदति नन्दनं । यथा—अभिज्ञाः छेदपातानां क्रियन्ते नन्दनद्रुमाः । नन्दनस्तु तनये हर्षकारिणि । हर्षकारिणि वाच्य-लिंगः । द्वयोर्यथा—पांडोर्नंदन नंदनं वनमिदम् ।।३७७।। नलिनं नलिकातोयेऽम्बुजेषु । नलति नलिनं । श्याकठीति (उ० २८२) इनः । अंबुजे पुंक्लीबः । गौडस्तु नलिनी पद्मिनी व्योमनिम्नगा कमलाकरे । नपुंसकं नलिकायां न पुंसि सरसीरुहे । इत्याह । नलिका अंतःशुषिरमुपकरणं । तत्र यथा—तलिननलिनवातैर्वह्निमु-



निदानं कारणे शुद्धौ तपसः फलयाचने ।
वत्सदाम्न्यवसाने च प्रधनं युधि दारुणे ।।३७९।।
प्रधानं प्रकृतौ बुद्धावुत्तमे परमात्मनि ।
महामात्रे प्रसूनं तु प्रसूते फलपुष्पयोः ।।३८०।।

न्मीलयंति । तोये यथा—पुलिनं नलिनं स्वल्पं । अंबुजे यथा—चरणनलिनन्यासोदंचन्नवांकुरकोरकः । नलिनी पुनः । पद्माकरे गंगाब्जिन्योः । पद्माकरे यथा—नलिनी निगूढसलिला च यत्र सा स्थलमित्यदः । पतति यासु योधने । गंगायां यथा—द्विपैर्मदजलासारैर्नलिनी मलिनीकृताः । अब्जिन्यां यथा—निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिंबम् । निधनं कुलनाशयोः । नियतं धनमत्र निवृत्तं धनमत्र वा निधनं । निपूर्वो धनिर्मरणार्थे इति सभ्याः । पुंक्लीबः । कुले यथा—कलचुरिनिधना धनानि दद्युः । नाशे यथा—कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः । अंतेऽपि । यथा—ध्वनंति धेनवो ग्रामनिधनेषु प्रतिव्रजम् ।।३७८।। निदानं कारणे शुद्धौ तपसः फलयाचने । वत्सदाम्न्यवसाने च । डुदांक् दाने । दांक्लवने दैवशोधने वा यथायोगं करणे भावे च अनटि निदानं । कारणे यथा—अयथाबलमारंभो निदानं क्षयसंपदः । शुद्धौ यथा—कारभोजनपात्राणां निदानं वह्निना भवेत् । तपसः फलयाचने यथा—रागाभिभूतः संभूतो निदानमिति निर्ममे । वत्सदाम्नि यथा—निदानसंदानितबालवत्सम् । अवसाने यथा—निदानेंतर्वूकः सपदि मरुता सोऽप्यपहृतः । प्रधनं युधि दारुणे । धनिर्मरणार्थोत्र निधनवत् । प्रधन्यतेऽस्मिन्ननेन वा प्रधनं । वर्षादयः क्लीबे (५।३।२९) इत्यल् । द्वयोर्यथा—क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।।२७९।। प्रधानं प्रकृतौ बुद्धावुत्तमे

प्रज्ञानं बुद्धौ चिह्ने च स्यात्प्रसन्नं प्रसादवत् ।
प्रसन्ना तु मदिरायां पवनो वायुवल्लयोः ॥३८१॥
पवनं पुनरापाके पद्मिनी योषिदन्तरे ।
अब्जेऽब्जिन्यां सरस्यां च पावनं जलकृच्छ्रयोः ॥३८२॥

परमात्मनि । महामात्रे । प्रधीयतेऽस्मिन् प्रधत्ते वा प्रधानं । अजहत् । क्लीबलिंगः । प्रकृतिः सत्त्वरजस्तमसां साम्यवस्था । तत्र उत्तमे च यथा—न महानयं न च बिभर्ति गुणसमतया प्रधानताम् । बुद्धौ परमात्मनि महामात्रे च यथा—वृत्तिः प्रधानानुगता जनस्य । प्रसूनं तु प्रसूते फलपुष्पयोः । प्रसूयते स्म प्रसूनं । सूयत्याद्योदित इति तस्य नः । प्रसूते वाच्यलिंगः । तत्र यथा—प्रसूनसूनुर्वनिता नितांतम् । फलपुष्पयोर्यथा—प्रसूनक्लृप्तं ददतः सदत्तंवः । पुरे स्य वास्तव्यकुटुंबितां गताः ॥३८०॥ प्रज्ञानं बुद्धौ चिह्ने च । प्रज्ञायतेऽनेन प्रज्ञानं । बुद्धौ यथा—प्रज्ञानमीदृग्विधमस्ति यस्य । चिह्ने यथा—प्रज्ञानेन वृषेण विद्धि गिरिशम् । स्यात्प्रसन्नं प्रसादवत् । प्रसीदति स्म प्रसन्नं । वाच्यलिंगः । यथा—अपि प्रसन्नं हरिणेषु ते मनः । प्रसन्ना तु मदिरायां । यथा—प्रसन्नामासन्नामपि दधति नो निर्मलधियः । पवनो वायुवल्लयोः । पुनाति पूयतेऽनेन वा पवनः । वायौ यथा—पवनश्च धूतनवनीपवनः । वल्लो निष्पावः ॥३८१॥ पवनं पुनरापाके । आपाकः कुलालपाकस्थानं । तत्र यथा—पवने पावकं कोपि पापः क्षिपति निष्कृपः । पद्मिनी योषिदंतरे । अब्जेऽब्जिन्यां सरस्यां च । पद्मानि विद्यंतेऽस्यां पद्मिनी । योषिदंतरं कामशास्त्रप्रसिद्धं । शेषेषु यथा—जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम् । पावनं जलकृच्छ्रयोः । पावयति पावनं ।